| | | | |
|---|---|---|---|
| राजज्योतिषी | प्रमुखः ज्यौतिषिकः | राजाको ज्योतिषी | Royal astrologer |
| खगोलविज्ञानम् | ग्रहाणां वैज्ञानिकम् अध्ययनम् | ग्रहको वैज्ञानिक अध्ययन गर्ने शास्त्र | Astronomy |
| समायोजनम् | समावेशनम् | मिलाउने काम | Adjustment |
| घटिकायन्त्रम् | समयसूचकोपकरणम् | घडी | Watch |
| दृश्याङ्कनयन्त्रम् | चित्रालेखनोपकरणम् | दृश्य खिच्ने यन्त्र | Camera |
| गोलयन्त्रम् | ग्रहनक्षत्राणां गते, अन्वेषणयन्त्रम् | ग्रहनक्षत्रको गति पत्ता लगाउने गोलाकार यन्त्र | Observatory |
| फलकयन्त्रम् | वृत्तांशबोधकरेखादीनां निर्णायकं ज्यौतिषयन्त्रम्, | वृत्तांश जनाउने रेखाको निर्णय गर्ने ज्योतिषीय यन्त्र | Chord |

## अभ्यासः

### श्रवणं भाषणं च

१. पाठं सस्वरं वाचयत ।

२. शिक्षकस्य साहाय्येन अधस्तनानि पदानि शिक्षकात् श्रुत्वा शुद्धम् उच्चारयत

आधुनिकविज्ञानजगति, खगोलविद्, अन्वेषकस्य, ज्योतिषशास्त्राणाम्

३. पाठे उल्लिखितानां वैज्ञानिकानां ज्योतिर्विदश्च नामानि वदत ।

४. चित्रं दृष्ट्वा वर्णयत



दूरदर्शनयन्त्रम्

५. अधो लिखितानां वाक्यानां द्रुतपठनं कुरुत

(क) प्रथमम् एषः कलशाकारं दूरदर्शकयन्त्रं निरमात् ।

(ख) कालान्तरे सः इङ्ग्ल्यान्डदेशस्य राजज्योतिषी अभवत् ।

(ग) एतस्य निर्माणेन खगोलविज्ञाने नवीनानि रहस्यानि उद्घाटितानि ।

(घ) सः गोलयन्त्रं फलकयन्त्रं घटिकायन्त्रम् इत्यादीनां निर्माणविधिं स्वग्रन्थेषु स्पष्टतया अलिखत् ।

६. पाठस्य अन्तिमम् अनुच्छेदं शिक्षकात् श्रुत्वा लिखत ।

७. पाठस्य तृतीयम् अनुच्छेदं श्रुत्वा एकवाक्येन उत्तरयत

(क) रासः कीदृशं दूरदर्शकयन्त्रं निर्मितवान् ?

(ख) हलनामकः वैज्ञानिकः किम् अन्विष्टवान् ?

(ग) केषां यन्त्राणां निर्माणे मानवः समर्थः अस्ति ?

८. शिक्षकाद् अधो लिखितान् प्रश्नान् श्रुत्वा उत्तरं दत्त

(क) तव गृहे कानि यन्त्राणि सन्ति ?

(ख) तुभ्यं किं यन्त्रं रोचते ?

(ग) त्वं पठनसहयोगाय किं यन्त्रम् अतीव महत्त्वपूर्णं मन्यसे ?

(घ) त्वं वैज्ञानिकेन सह मिलसि चेत् कस्य यन्त्रस्य निर्माणाय अनुरुणत्सि ?

९. श्रवणपाठं श्रुत्वा प्रश्नान् उत्तरयत

**(क) रिक्तस्थानं पूरयत**

(अ) शुक्रराजस्य जन्म ................ तमे वैक्रमाब्दे अभवत् ।

(आ) एष वेदान्तदर्शने .............परीक्षायां समुत्तीर्णः अभवत् ।

**(ख) एकपदेन उत्तरयत**

(अ) शुक्रराजस्य मातुः नाम किम् आसीत् ?

(आ) एषः कस्य अनुयायी आसीत् ?

(इ) एषः केषां रहस्यं बोधयति स्म ?

(ई) एषः कैः सह तर्कान् उपस्थापयति स्म ?

**(ग) समीचीनवाक्ये (√) चिह्नम्, असमीचीनवाक्ये च (×) चिह्नं दत्त**

(अ) शुक्रराजः संस्कृतभाषां जानाति स्म ।

(आ) नारीणाम् उत्थानविषये एषः निष्क्रियः आसीत् ।

(इ) जनतानाम् अधिकारविषये एषः वदति स्म ।

(ई) एषः मृत्युदण्डेन भीतः आसीत् ।

## पठनम्

१. अधो लिखितं गद्यांशं वाचयत

मानवः विवेकी प्राणी वर्तते । सृष्टिकालाद् आरभ्य मानवः बहूनां यन्त्राणां निर्माणम् अकरोत् । तेषु यानम् अपि विशिष्टतमं यन्त्रं वर्तते । प्राचीनकाले अश्वगजगर्दभादयः यानरूपेण प्रयुज्यन्ते स्म । कालानन्तरं मानवः रथादीनां निर्माणम् अकरोत् । संस्कृतभाषायाः आदिकाव्ये रामायणे पुष्पकविमानस्य चर्चा प्राप्यते । केचिद् विद्वांसः प्रथमविमानरूपेण तस्य चर्चां कुर्वन्ति । पश्चाद् आगत्य विंशयां शताब्द्यां राइटभ्रातरौ विमानस्य निर्माणम् अकुरुताम् । अधुना शीघ्रं गन्तव्यप्राप्त्यर्थं जनाः विमानेन यात्रां कुर्वन्ति ।





विवेकी प्राणी मानिसले धेरै यन्त्रको निर्माण गरेको छ । तीमध्ये सवारीसाधन पनि एक हो । प्राचीनकालमा घोडा, हात्तीलगायतलाई सवारी साधनका रूपमा प्रयोग गरिन्थ्यो । कालान्तरमा रथको निर्माण गरियो । संस्कृतको आदिकाव्य रामायणमा पुष्पक विमानको चर्चा छ । कसैले यसैलाई पहिलो विमान भनेका छन् । आधुनिक विमानको निर्माण बिसौँ शताब्दीमा राइट दाजुभाइले गरेका हुन् । अहिले सजिलोसँग गन्तव्यमा पुग्न मानिस विमानको प्रयोग गर्छ ।

## २. अधस्तनम् अनुच्छेदं पठित्वा प्रश्नान् उत्तरयत



सुसाङ्ख्यम् आधुनिकविज्ञानस्य चामत्कारिकः आविष्कारः वर्तते । एतस्य माध्यमेन वयं बहुविधानि कार्याणि कर्तुं शक्नुमः । अत्र येषां कार्यक्रमाणां निवेशः भवति, तान् एतत् सम्पादयति । संस्कृतभाषायां वर्णानाम् उच्चारणं यादृशं भवति, वर्णसंयोजनेन निर्मितानां शब्दानाम् उच्चारणम् अपि तादृशं भवति । कुत्रचित् भिन्नवर्णानां संयोजनेन निर्मितस्य शब्दस्य अपि उच्चारणं समानं दृश्यते । अत्र आङ्ग्लभाषायाः उदाहरणं प्रस्तूयते । एतस्यां भाषायां एकः शब्दः अस्ति - Know । अत्र वर्णानाम् उच्चारणं भवति- केएनओडब्लु । एतेषां वर्णानां संयोजनेन निर्मितस्य शब्दस्य उच्चारणं भवति- नो । भूय आङ्ग्लभाषायाः अपरम् उदाहरणं प्रस्तूयते । एतस्याः भाषायाः एव अपरः शब्दः अस्ति - No । अस्मिन् शब्दे वर्णानाम् उच्चारणं भवति - एनओ । शब्दस्य उच्चारणं भवति- नो । एतयोः शब्दयोः वर्णानाम् उच्चारणं पृथक् अस्ति परम् वर्णवैविध्येन निर्मितयोः शब्दयोः उच्चारणं समानम् अस्ति । संस्कृतभाषायां वर्णानाम् उच्चारणं यादृशं भवति शब्दानाम् उच्चारणम् अपि तादृशम् एव भवति । यथा- रामः । अत्र वर्णानाम् उच्चारणम् अपि 'रामः' भवति, शब्दस्य उच्चारणम् अपि रामः एव भवति । अतः एव वाचकसुसाङ्ख्ये संस्कृतभाषा उपयोगितायाः आधारेण श्रेष्ठा भाषा अस्ति इति स्वीक्रियते । नासासंस्थायाः वैज्ञानिकाः अन्तरिक्षे सन्देशसम्प्रेषणार्थं संस्कृतभाषायाः उपयोगित्वं स्वीकुर्वन्तः सन्ति ।

कम्प्युटर आधुनिक विज्ञानको चमत्कारपूर्ण आविष्कार हो । यसबाट अनेकौं काम गर्न सकिन्छ । कम्प्युटर भाषिक अध्ययनका लागि पनि उपयोगी मानिन्छ । संस्कृत भाषा भाषिक सम्प्रेषणका लागि उपयोगी मानिएको छ । संस्कृतमा जे बोलिन्छ, त्यही लेखिन्छ, जस्तै : रामः । अङ्ग्रेजीमा भने यसमा समस्या देखिएको छ, जस्तै know र No यस तर्कमा आधुनिक वैज्ञानिकहरूले पनि विश्वास देखिएको छ । अमेरिकी अन्तरिक्ष अनुसन्धानसँग सम्बन्धित संस्था नासाले पनि यसबारे सूक्ष्म अनुसन्धान गरिरहेको छ ।

(क) सुसाङ्ख्यस्य साहाय्येन किं कर्तुं शक्यते ?

(ख) संस्कृतभाषायां शब्दानामुच्चारणं कीदृशं भवति ?

(ग) आङ्ग्लभाषायां वर्णभेदेन उच्चारणसाम्यस्य उदाहरणानि प्रस्तुत ।

(घ) वाचकसुसाङ्ख्ये संस्कृतभाषा किमर्थम् उपयोगिनी अस्ति ?

(ङ) नासावैज्ञानिकाः किं स्वीकुर्वन्तः सन्ति ?

३. अधो लिखितानां शब्दानां पर्यायपदानि शिक्षकसाहाय्येन निगदत

कर्माणि, अपरिहार्यम्, भाषणम्, मेलनेन, अन्यः, तुल्यम्, आकाशे

४. अधो लिखितं गद्यांशं पठित्वा प्रश्नान् उत्तरयत

भास्कराचार्यः गणितज्ञः, खगोलविद्, महान् चिन्तकः च आसीत् । तस्य जन्म १११४ तमे ईशवीयाब्दे भारतस्य विज्जडविडनामके ग्रामे अभवत् । तस्य पिता महेश्वराचार्यः अपि गणितज्ञः विद्वान् आसीत् । पितुः प्रभावेण स अपि खगोलविज्ञानस्य अध्ययनानुसन्धानयोः संलग्नः अभवत् । द्वात्रिंशद्वर्षीयः स 'सिद्धान्तशिरोमणि' नामकं ग्रन्थं १०७१ तमे ईशवीयाब्दे व्यरचयत् । अयं ग्रन्थः ज्योतिषशास्त्रस्य प्रतिनिधिग्रन्थः मन्यते । अस्य ग्रन्थस्य विविधासु भाषासु अनुवादः प्राप्यते । सः 'करणकुतूहलं', 'सर्वतोभद्रयन्त्रम्' इति द्वयोः ग्रन्थयोः च रचनाम् अकरोत् । तस्य खगोलविज्ञाने महत्त्वपूर्णं योगदानम् अस्ति । तेन गोलयन्त्र-नाडीवलययन्त्र-फलकयन्त्राणां निर्माणविधेः चर्चा स्वग्रन्थेषु

तदानीम् एव विहिता आसीत् । विद्वांसः पाश्चात्त्येषु वैज्ञानिकेषु केप्लर-न्युटनादिषु तेन प्रतिपादितस्य सिद्धान्तस्य प्रभावं परिलक्षयन्ति । सः ज्योतिर्विद् ११७९ तमे ईशवीयाब्दे पञ्चत्वं गतः, परन्तु स्वकृतिकौशलेन अस्माकं मनसि सदा सश्रद्धं राजते ।

भास्कराचार्य महान् गणितज्ञ, खगोलविद् र चिन्तक थिए । उनले बत्तिस वर्षकै उमेरमा सिद्धान्तशिरोमणि नामक ज्योतिषशास्त्रको प्रतिनिधि ग्रन्थ रचना गरे । उनले अङ्कगणित, बीजगणित, ज्यामिति र खगोलसम्बद्ध गणितीय ग्रन्थको रचना गरे । केप्लर, न्युटनजस्ता प्रसिद्ध पाश्चात्त्य वैज्ञानिकहरूमा पनि भास्कराचार्यको प्रशस्त प्रभाव परेको देखिन्छ । भास्कराचार्य ग्रहगणितका मूर्धन्य विद्वान्का रूपमा प्रसिद्ध छन् ।

(क) भास्कराचार्यः कदा अजायत ?

(ख) तस्य पिता कः आसीत् ?

(ग) भास्कराचार्यः कान् ग्रन्थान् अरचयत् ?

(घ) तस्य ग्रन्थेषु केषां यन्त्राणां चर्चा प्राप्यते ?

## ५. उपरि प्रदत्तम् अनुच्छेदम् अनुसृत्य परस्परं मेलयत

| | |
|---|---|
| सिद्धान्तशिरोमणिः | खगोलविद् |
| भास्कराचार्यः | निर्माणविधिः |
| नाडीवलययन्त्रम् | अनुवादः |
| विविधासु भाषासु | महेश्वराचार्यः |
| पिता | ग्रन्थः |

## ६. कालक्रमेण खगोलविदां नामानि कथयत

रासः, ग्यालिलियो, फाउनहोफरः, हर्सेलः, भास्कराचार्यः

## लेखनम्

१. **इमानि पदानि शुद्धतया लिखत**

भित्तिघटिकाम्, मुहूर्तम्, लौहश्रेण्याम्, एकादशशताब्द्याः, लघुदूरदर्शकयन्त्रम्, स्वनिर्मितस्य, सङ्गीतानुरागी, वाद्यवादकरूपेण, ज्योतिषशास्त्राणाम्, बृहदाकारकम्, रश्मिविश्लेषकयन्त्रस्य

२. **पाठस्य द्वितीयस्य अनुच्छेदस्य अनुलेखनं कुरुत ।**

३. **पदानि प्रयुज्य वाक्यानि रचयत**

गणितज्ञः, खगोलविज्ञानम्, दूरदर्शकयन्त्रम्, अन्वेषकः, नवीनम्, स्पष्टतया, तदानीम्, साम्प्रतम्, विख्यातः

४. **कोष्ठकाद् उचितं पदं विचित्य रिक्तस्थानं पूरयत**

| मेधावी, वाद्यवादनेन, विहितम्, पूर्वनिर्मितात्, कलशाकारम् |
|---|

(क) प्रथमम् एषः -------------- दूरदर्शकयन्त्रं निरमात् ।

(ख) बाल्यादेव सः परिश्रमी, साहसी -------------- च आसीत् ।

(ग) हर्सेलः -------------- अत्यधिकं धनम् अर्जितवान् ।

(घ) हर्सेलमहोदयेन अन्विष्टस्य ग्रहस्य नामकरणं 'हर्सेल' इति -------------- ।

(ङ) रासनामकः वैज्ञानिकः -------- यन्त्रादपि आधुनिकं दूरदर्शकयन्त्रं निर्मितवान् ।

५. **सङ्क्षेपेण उत्तराणि लिखत**

(क) ग्यालिलियोमहोदयः कुत्रत्यः आसीत् ?

(ख) दूरदर्शकयन्त्रस्य साहाय्येन ग्यालिलियो किम् अवर्णयत् ?

(ग) हर्सेलः इङ्ग्ल्यान्डदेशे कस्मिन् कार्ये नियुक्तः अभवत् ?

(घ) हर्सेलः पूर्वं कीदृशस्य यन्त्रस्य निर्माणम् अकरोत् ?

(ङ) हर्सेलमहोदयेन अन्विष्टः ग्रहः साम्प्रतं केन नाम्ना विख्यातः अस्ति ?

(च) रासनिर्मितं दूरदर्शकयन्त्रं कीदृशम् आसीत् ?

(छ) कः काचतालस्य निर्माणविधिम् अन्विष्टवान् ?

(ज) भास्कराचार्येण प्रतिपादितं किम् आसीत् ?

(झ) भास्कराचार्यः स्वग्रन्थेषु किं स्पष्टतया अलिखत् ?

## ६. कोष्ठस्थसङ्केतानुसारेण रूपं निर्माय वाक्यानि लिखत

**उदाहरणम् -** (युष्मद्, षष्ठी, एकवचनम्) गृहं कुत्र अस्ति ?

तव गृहं कुत्र अस्ति ?

(क) (अस्मद्, प्रथमा, द्विवचनम्) आपणं गच्छावः ।

(ख) रमा (युष्मद्, द्वितीया, बहुवचनम्) पाठयति ।

(ग) मित्राणि (अस्मद्, तृतीया, एकवचनम्) सह भ्रमन्ति ।

(घ) भगिन्यौ (युष्मद्, चतुर्थी, द्विवचनम्) खाद्यकं यच्छतः ।

(ङ) युवां (अस्मद्, पञ्चमी, बहुवचनम्) दूरं तिष्ठतः ।

(च) (युष्मद्, षष्ठी, बहुवचनम्) विद्यालयः समीपे अस्ति ।

(छ) (अस्मद्, सप्तमी, एकवचनम्) दुर्बलता नास्ति ।

(ज) वयं (युस्मद्, तृतीया, बहुवचनम्) सह कुत्रापि न गच्छामः ।

(झ) त्वं (अस्मद्, द्वितीया, एकवचनम्) कथयसि ।

(ञ) (युष्मद्, सप्तमी, द्विवचनम्) सद्गुणाः सन्ति ।

## रचनात्मकः अभ्यासः

१. अधः प्रदत्तानां शब्दानां साहाय्येन पञ्चभिः वाक्यैः चित्रवर्णनं कुरुत

(विद्यालयस्य, उद्यानम्, पुष्पाणि, विकसन्ति, मह्यम्, रोचते, समये समये, सिञ्चामि, मनः, प्रफुल्लितम्)



२. घटनाक्रमसंयोजनेन कथारचनां कुरुत

| | |
|---|---|
| | वृक्षस्य शाखासु वानराः आसन् । |
| वृद्धः | आम्रभक्षणाय उपायम् अचिन्तयत् । |
| | एकदा एकः वृद्धः क्षुधितः अभवत् । |
| वृद्धः | गमनक्रमे एकम् उन्नतम् आम्रवृक्षम् अपश्यत् । |
| | आम्रभक्षणेन वृद्धः क्षुधानिवृत्तः जातः । |
| वृद्धः | वानरान् लक्ष्यीकृत्य पाषाणखण्डानां क्षेपणम् अकरोत् । |
| वृद्धः | मार्गे गच्छन् आसीत् । |
| क्रुद्धाः | वानराः वृद्धं लक्ष्यीकृत्य आम्रफलैः प्रहारम् अकुर्वन् । |

२. चित्राधारेण वर्णनं कुरुत



श्रवणपाठः

## शुक्रराजः शास्त्री

शुक्रराजः शास्त्री नेपालमातुः सुपुत्रः अस्ति । एषः १९५० तमे वैक्रमाब्दे श्रावणपूर्णिमायाम् अजायत । अस्य मातुः नाम रत्नमायाकुमारी तथा पितुः नाम माधवराजः जोशी आसीत् । एतस्य वास्तविकं नाम शुक्रराजः जोशी आसीत् । वेदान्तदर्शने शास्त्रीपरीक्षां समुत्तीर्य एव एष शास्त्री अभवत् । एष नेपाली-नेपालभाषा-संस्कृत-हिन्दी-आङ्ग्लभाषाणां ज्ञाता आसीत् । संस्कृतभाषायां नेपालिभाषायां नेपालभाषायां हिन्दीभाषायां च एषः पुस्तकानि अरचयत् । एष आर्यसमाजस्य अनुयायी च आसीत् । गीतोपनिषदां रहस्यं प्रवचनस्य माध्यमेन एष जनान् बोधयति स्म । तदानीं व्याप्ताया अशिक्षाया, अन्धविश्वासस्य, बालविवाहस्य च शास्त्री विरोधम् अकरोत् । नारीणाम् उत्थानविषये एषः क्रियाशीलः आसीत् । एषः राणाशासकैः सह धर्मस्य, न्यायस्य, अधिकारस्य विषये च तर्कान् उपस्थापयति स्म । एषः जनतानाम् अधिकारविषये वदति स्म । एषः एतादृशः निर्भयः शास्त्री मृत्युदण्डं प्राप्य १९९७ तमे वैक्रमाब्दे माघमासस्य दशमे दिने पञ्चत्वं गतः ।

पञ्चमः पाठः

# चत्वारः भेदाः

## मित्रैः सह विमर्शनं कुरुत

**जन्मप्रक्रिया**
- (क) अण्डजः
- (ख) स्वेदजः
- (ग) उद्भिज्जः
- (घ) जरायुजः

**युगम्**
- (क) सत्यम्
- (ख) त्रेता
- (ग) द्वापरम्
- (घ) कलिः

**मानवावस्था**
- (क) बाल्यम्
- (ख) यौवनम्
- (ग) वयस्कम्
- (घ) वृद्धत्वम्

**रक्तसमूहः**
- (क) A
- (ख) B
- (ग) AB
- (घ) O

**बीजम्**
- (क) कालाजाली
- (ख) यवानिका
- (ग) मेथिका
- (घ) चन्द्रशूरः

**सेनाङ्गम्**
- (क) हस्ती
- (ख) अश्वः
- (ग) रथः
- (घ) पदातिः

**आर्यसत्यम्**
- (क) दुःखमस्ति (हेयम्)
- (ख) दुःखस्य कारणमस्ति (हेयहेतुः)
- (ग) दुःखं निवारयितुं शक्यते (हानम्)
- (घ) दुःखनिवारणस्य उपायः अस्ति (हानोपायः)

**नारीप्रधानसामाजिकजीवनस्य प्रतीकम्**
- (क) वज्रवाराही
- (ख) नीलवाराही
- (ग) धूम्रवाराही
- (घ) श्वेतवाराही

**ईश्वरप्राप्तेः द्वारम्**
- (क) सत्सङ्गः
- (ख) सत्यम्
- (ग) सन्तोषः
- (घ) इन्द्रियनिग्रहः

**इस्लामधर्मप्रवर्तकस्य उत्तराधिकारी**
- (क) हजरत-अबुबकर-महाभागः
- (ख) हजरत-उमर-महाभागः
- (ग) हजरत-उस्मान-महाभागः
- (घ) हजरत-अलि-महाभागः

**सङ्घः महामण्डलः**
- (क) साधुः
- (ख) साध्वी
- (ग) श्रावकः
- (घ) श्राविका

**प्रमुखदिशः**
- (क) पूर्वः
- (ख) पश्चिमः
- (ग) उत्तरः
- (घ) दक्षिणः

**वाणी**
- (क) परा
- (ख) पश्यन्ती
- (ग) मध्यमा
- (घ) वैखरी

काल-वाणी-धर्म-प्रकृति-दर्शन-सङ्घटन-स्वरूपावस्थासु चतुर्णां पक्षाणां विशिष्टं महत्त्वं वर्तते । श्रीमद्भगवद्-गीतायां श्रीकृष्णः अर्जुनम् उपदिशन् चतुर्षु वर्णेषु स्वस्य दार्शनिकं चिन्तनं प्रकटयति । यथा-

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।**
**तस्य कर्तारमपि मां विद्धयकर्तारमव्ययम् ।**



**सरलार्थः**

मया गुणानां कर्मणां च विभागपूर्वकं चत्वारः वर्णाः सृष्टाः सन्ति । मयि सृष्टिरचनायाः कर्तरि सत्यपि त्वं माम् अविनाशिनं परमेश्वरम् अकर्तारमेव जानीहि ।

मैले गुण र कर्मको विभाग गरेर चार वर्णको सृष्टि गरेको हुँ । सृष्टिरचनाको कर्ता भए पनि तिमी अविनाशी परमेश्वर मलाई अकर्ता भनेर नै बुझ ।

# गीतापाठः



१. कर्मण्येवाधिकारस्ते मा फलेषु कदाचन
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥

**अन्वयः**

कर्मणि एव ते अधिकारः (अस्ति) फलेषु कदाचन मा । (त्वम्) कर्मफलहेतुः मा भूः । अकर्मणि ते सङ्गः मा अस्तु ।

**सरलार्थः**

हे अर्जुन ! तव कर्मणि एव अधिकारः अस्ति । कर्मफलेषु कदापि तव अधिकारः नास्ति । अतः त्वं कर्मणः फलप्राप्त्यर्थम् अथवा फलप्राप्तेः कारणेन कर्मणः कर्ता मा भव । फलप्राप्तिहेतुना कर्म क्रियते चेत् फलस्य अप्राप्तेः अवस्थायाम् त्वं दुःखम् अनुभवसि, अर्थात् फलासक्तेः कारणेन रागमोहादयः उत्पद्यन्ते, ते च दुःखस्य कारणानि भवन्ति । परन्तु कर्मणः फलस्य आशा न क्रियते चेत् किमर्थं कर्म करणीयम् इति चिन्तयित्वा कर्म न कृत्वा त्वया समयः न यापनीयः, अकर्मणि तव आसक्तिः न भवेत्, यतः कर्मणा एव जगत् चलति ।

हे अर्जुन, तिम्रो अधिकार कर्म गर्नुमा मात्र छ फलमा छैन । तिमी कर्मको फलको कारण नबन । तिमी कर्म नगरी बस्ने पनि नगर ।

२. नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥

**अन्वयः**

त्वं नियतं कर्म कुरु । अकर्मणः कर्म ज्यायः हि । ते शरीरयात्रा अपि अकर्मणः न प्रसिद्ध्येत् च ।

**सरलार्थः**

त्वम् शास्त्रैः प्रतिपादितं कर्म कुरु । विधिविहितं कर्म श्रेयसे भवति । कर्मत्यागात् कर्मकरणम् उत्तमं भवति । शरीरस्य परिवारस्य च पालन-पोषणार्थम् अर्थात् जीवनार्थं च कर्म आवश्यकम् एव अस्ति । यदि कर्म न विधीयते चेत् जीवनम् एव असम्भवं भवति । यतः जनः जीवितः सन् कर्म कुर्वन् एव पुरुषार्थ-चतुष्टयम् अर्जितुं शक्नोति । अतः एव कर्म करणीयम् ।

तिमी शास्त्रले बताएको कर्म गर । शास्त्रअनुसारको कर्म कल्याणकारक हुन्छ । कर्म नगर्नुभन्दा कर्म गर्नु उत्तम हो । जीवन जिउनका लागि पनि कर्म आवश्यक छ ।

३. तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥

**अन्वयः**

तस्मात् (त्वम्) सततम् असक्तः कार्यम् कर्म समाचर । पूरुषः असक्तः कर्म आचरन् हि परम् आप्नोति ।

**सरलार्थः**

आसक्तिः बन्धनाय भवति । अतः आसक्तिरहितो भूत्वा त्वं कर्म कुरु । तच्च कर्म शास्त्रप्रतिपादितं भवतु । कार्यं कर्म एव त्वया करणीयम् । कामनारहितं वा निष्कामं कर्म कुरु । यतः कामनावशात् कर्म क्रियते चेत् तत् कामनायाः अपूरणे दुःखकारणं भवति । निष्कामं कर्म तु चित्तशुद्धये क्रियते । आसक्तिरहितः सन् कर्म कृत्वा मानवः परमं पदं प्राप्नोति ।

कुनै कुराको लोभले बन्धनमा पार्दछ । त्यसैले लोभरहित अमर कर्म गर । तिमी कामनारहित कर्म मात्र गर । यस्तो कर्मबाट मानिसले उत्तम स्थान प्राप्त गर्दछ ।

४. कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसङ्ग्रहमेवापि सम्पश्यन्कर्तुमर्हसि ॥

**अन्वयः**

जनकादयः कर्मणा एव संसिद्धिं हि आस्थिताः । (त्वम्) लोकसङ्ग्रहं सम्पश्यन् अपि (कर्म) कर्तुम् अर्हसि एव ।

**सरलार्थः**

जनकः त्यागी कर्मयोगी आसीत् । न केवलं जनकः अपि तु बहवः महर्षयः कर्म कृत्वा एव सिद्धिं प्राप्तवन्तः । त्वं समस्तं विश्वम् पश्यसि एव लोक-व्यवहार-सञ्चालनार्थम् अपि कर्म आवश्यकं वर्तते । अतः अनासक्तः सन् कर्म कुरु । कर्म-सम्पादनार्थं त्वं योग्यः असि अर्थात् तव कृते फलाशा-रहितस्य कर्मणः करणम् एव उचितं भवति ।

जनक आदि महापुरुषहरूले कर्म गरेर नै सिद्धि प्राप्त गरे । त्यसैले लोभरहित भएर कर्म गर । तिमी कर्म गर्न योग्य छौ ।

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| कर्मफलहेतुः | फलप्राप्तेः कारणेन कर्मणः कर्ता | फल पाउने आसले कर्म गर्नेवाला | Reason of the results of deeds |
| नियतम् | नियमबद्धम् | शास्त्र आदिद्वारा नियमबद्ध गरिएको | Prescribed |
| ज्यायः | श्रेष्ठः | उत्तम | Best |
| शरीरयात्रा | जीवनम् | जीवनको यात्रा | Livelyhood, Way of life |
| असक्तः | इच्छारहितः, निष्कामः | फलको इच्छा नगर्ने | Without any desire |
| संसिद्धिः | सिद्धिः, मुक्तिः | साधनाद्वारा प्राप्त हुने शक्ति | Salvation, Power of penance |
| लोकसङ्ग्रहः | विश्वम्, लोकव्यवहारः | संसार | World |

## अभ्यासः

### श्रवणं भाषणं च

१. पाठस्थ-श्लोकान् शिक्षकात् श्रुत्वा लयपूर्वकम् अनुवाचयत ।

२. शिक्षकस्य साहाय्येन अधो लिखितानि पदानि शुद्धम् उच्चारयत

आशीर्वादम्, परिचिनोति, संस्कृतिः, आवश्यकता, विश्वस्मिन्, मङ्गलस्य, सौभाग्यम् ।

३. श्लोकं श्रुत्वां उत्तरं वदत

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत् ॥

(क) के सुखिनः भवन्तु ?

(ख) 'निरामयः' अस्य अर्थः कः ?

(ग) कः दुःखभाग् न भवेत् ?

४. चित्रवर्णनं कुरुत



५. शिक्षकसाहाय्येन अधो लिखितेषु शब्देषु स्त्रीलिङ्गस्य शब्दान् चिनुत

रोगी, रोगिणी, वृद्धः, वृद्धा, बालकः, बालिका, अजः, अजा, सुन्दरः, सुन्दरी, पिता, माता, पितामहः, पितामही, मातुलः, मातुलानी, श्वशुरः, श्वश्रूः, पितृव्यः, पितृव्या

६. 'अस्माभिः कथं कर्म कर्तव्यम्' इति विषये कक्षायाम् समूहान् निर्माय क्रमेण सामूहिकं मतं प्रस्तुवत ।

७. पाठस्थान् श्लोकान् वाचयित्वा शिक्षकं श्रावयत ।

८. श्रवणपाठं श्रुत्वा प्रश्नान् उत्तरयत

**(अ) एकपदेन प्रश्नान् उत्तरत**

(क) का समाचारपत्राणि पठितुम् इच्छति ?

(ख) का गतवती नास्ति ?

(ग) कः व्यङ्ग्यचित्रं द्रष्टुम् इच्छति ?

(घ) कामना स्वयं किं कृत्वा समाचारान् ज्ञास्यति ?

**(आ) पूर्णवाक्येन प्रश्नान् उत्तरत**

(क) नेपाल-दूरदर्शने कः समाचारं वाचयति ?

(ख) सर्वं कस्य इच्छानुसारं न चलति ?

(ग) का का समाचारपत्राणि अवश्यं पठिष्यतः ?

(घ) संयमः किं द्रष्टुं न शक्नोति ?

**(इ) सत्यकथने (√) चिह्नम् असत्यकथने च (×) चिह्नं दत्त**

(क) कामना स्वयं पठित्वा समाचारान् ज्ञास्यति । ( )

(ख) साधना अपि समाचारं द्रष्टुम् इच्छति । ( )

(ग) बालिके समाचारपत्राणि पठित्वा दूरदर्शनं द्रक्ष्यतः । ( )

(घ) संयमः हसित्वा वदति । ( )

## पठनम्

### १. अधो लिखितयोः पदसमूहयोः पदानि सम्यक् पठत

'अ' पदसमूहः

सह, असमर्था, आसीत्, सहयोगः, संस्कृतिः, सम्बन्धस्य, सन्ति, सततम्, असक्तः

'आ' पदसमूहः

वृद्धा, भवान्, अकरवम्, आवश्यकता, कर्तव्यः, विश्वस्मिन्, मानवः, केवलम्, विहिता, भगवतः, विशेषतः

### २. अधो लिखितं गद्यांशं पठित्वा प्रश्नान् उत्तरयत

श्रीमद्भगवद्गीता महाभारतस्य एकः अंशः अस्ति । व्यासविरचितस्य महाभारतस्य भीष्मपर्वणः इयं समुद्धृता वर्तते । तत्र अर्जुनः कुरुक्षेत्रे युद्धाय आगतान् स्वसम्बन्धिनः दृष्ट्वा विमूढः अभवत् । अर्जुनः श्रीकृष्णम् अवदत्, "न योत्स्ये ।" तदनन्तरं श्रीकृष्णः अर्जुनाय उपदेशामृतम् अयच्छत् । तदेव गीता इति नाम्ना विश्वप्रसिद्धं वर्तते । गीतायाम् अष्टादशसु अध्यायेषु सप्तशतं श्लोकाः सन्ति । वेदस्य ज्ञानखण्डम् उपनिषद् इति नाम्ना परिचीयते । तासां सर्वासाम् उपनिषदां सारः गीता अस्ति इति विद्वांसः विश्वसन्ति । यदि उपनिषदः गावः सन्ति चेत् तासां दोग्धा श्रीकृष्णः अस्ति । वत्सः अर्जुनः अस्ति, यतः सः प्रथमं दुग्धपानम् अकरोत् । भोक्ता सुधियः भवन्ति चेत् दुग्धं गीतामृतम् अस्ति इति लोकाः मन्यन्ते । यथा -

**सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।**
**पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥**

एतत् सत्यम् अस्ति । गीता एतादृशी एव वर्तते ।

श्रीमद्भगवद्गीता व्यासरचित महाभारतको भीष्मपर्वबाट उद्धृत अंश हो । महाभारतको युद्ध सुरु हुनै लाग्दा अर्जुनमा मोह पैदा भयो । युद्धमा मान्यजन र आफन्तलाई मार्नुपर्ने भयो भनेर उनी खिन्न भए । उनले श्रीकृष्णसँग भने, "युद्ध गर्दिनँ ।" श्रीकृष्णले अर्जुनलाई अन्यायीका विरुद्ध युद्ध लडेर कर्तव्य पूरा गर्न उपदेश दिए । त्यही उपदेश गीताका नामबाट प्रसिद्ध छ । गीतामा अठार अध्याय र सात सय श्लोक छन् । यो सम्पूर्ण उपनिषद्को सार मानिन्छ । गीताका विषयमा एउटा प्रसिद्ध भनाइ छ । यसअनुसार उपनिषद् गाई हुन् र तिनलाई दुहुने श्रीकृष्ण हुन् । अर्जुन बाच्छो हुन् र दुधको उपभोग गर्ने विद्वान्हरू हुन् । गीताको अमृतमय उपदेश चाहिँ दुध हो । गीता यो भनाइ जस्तै छ ।

**प्रश्नाः**

(क) गीता कस्य अंशः अस्ति ?

(ख) गीता महाभारतस्य कस्मिन् पर्वणि अस्ति ?

(ग) गीतायां कति अध्यायाः कति च श्लोकाः सन्ति ?

(घ) कासां सारः गीता अस्ति ?

(ङ) उपनिषदः गावः सन्ति चेत् श्रीकृष्णः कः अस्ति ?

३. अधो लिखितं सुभाषितं सस्वरं वाचयत

उदेति सविता ताम्रस्ताम्रमेवास्तमेति च ।
सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥

४. उपरि प्रदत्तं श्लोकम् आधृत्य महतां चरित्रं वर्णयत ।

५. अधो लिखिते हास्यपद्ये लयपूर्वकं पठित्वा प्रश्नान् उत्तरयत

(क) चतुरः सखि मे भर्ता यल्लिखति तत् परो न वाचयति ।
त्वत्तोऽपि चतुरो मे स्वयं लिखति स्वयं न वाचयति ॥१॥

(ख) उष्ट्राणां च गृहे लग्नं गर्दभाः शान्तिपाठकाः ।
परस्परं प्रशंसन्ति अहो रूपमहो ध्वनिः ॥२॥

**सरलार्थः**

द्वयोः महिलयोः मेलनानन्तरं प्रथमा महिला सगर्वम् अवदत्, "भो सखि ! मम पतिः अतीव चतुरः अस्ति । सः यत् लिखति सः एव पठितुं शक्नोति । तत्परः अन्यः कः अपि पठितुं न शक्नोति ।" प्रथमायाः महिलायाः कथनं श्रुत्वा द्वितीया महिला अकथयत्, "तव पतेः अधिकं मम पतिः चतुरः अस्ति । सः तु यत् लिखति, सः स्वयम् एव वाचयितुं न शक्नोति ।"

दुई महिला कुरा गर्दै थिए । एउटीले फुर्तीसाथ भनी, "हेर साथी, मेरा पति ज्यादै चलाख हुनुहुन्छ । आफूले लेखेको उहाँ आफू मात्र पढ्न सक्नुहुन्छ । अरू कसैले पनि पढ्न सक्दैन ।" पहिलीको कुरा सुनेर दोस्रीले अझ बढी फुर्ती देखाउँदै भनी, "तिम्रा पतिभन्दा त मेरा पति झन् चलाख हुनुहुन्छ । उहाँ आफू जे लेख्नुहुन्छ आफैँ नै पढ्न सक्नुहुन्न ।"

**सरलार्थः**

एकदा उष्ट्राणां गृहे विवाहः आसीत् । तत्र शान्तिपाठकाः तु गर्दभाः आसन् । ते परस्परं प्रशंसन्तः आसन् । गर्दभाः भवन्तः सुन्दराः सन्ति, अहो भवतां रूपम् इति कृत्वा उष्ट्राणां प्रशंसाम् अकुर्वन्, उष्ट्राः च भवन्तः गायननिपुणाः सन्ति, अहो भवतां कर्णप्रियः ध्वनिः इति कृत्वा गर्दभानां प्रशंसां कृतवन्तः ।

कुनै ठाउँमा उँटको विवाह हुँदै थियो । गधाहरू शान्तिपाठ गर्न थाले । त्यसै क्रममा उनीहरूले उँटलाई भने, "हजुरको रूप त कति राम्रो राम्रो ! चिटिक्क परेको ।" आफ्नो प्रशंसा सुनेर मक्ख परेको उँटले पनि गधालाई भन्यो, "हजुरहरू पनि त गायनकलामा निपुण हुनु हुँदोरहेछ । कस्तो कर्णप्रिय सुमधुर स्वर !"

**प्रश्नाः**

(क) प्रथममहिलायाः पतेः अक्षराणि कीदृशानि आसन् ?

(ख) द्वितीयमहिलायाः पतिः पठितुं शक्नोति न वा ?

(ग) कस्य गृहे विवाहः आसीत् ?

(घ) शान्तिपाठकाः के आसन् ?

(ङ) गर्दभानां स्वरः कीदृशः भवति ?

६. प्रदत्तं गद्यांशं पठित्वा विशेषणपदानि चिनुत

डोल्मा षष्ठकक्षायां पठति । सा परिश्रमिणी छात्रा अस्ति । सा उत्साहिनी च वर्तते । सा सदा पठनाय मतिं ददाति । पठनशीला सा गृहे अपि कार्यं करोति । सदाचारिणी सा सदैव प्रियं वदति । सा गायिका च वर्तते । तस्याः पिता अपि ज्ञानी अस्ति । सः प्रियां तां व्यवहारविषये उपदिशति । व्यवहारकुशला डोल्मा मित्राणां सहयोगं करोति । संस्कृतविषयस्य शिक्षिका जयन्ती तां प्रशंसति । स्वकार्याणि कर्तुं समर्था सा सहयोगं विना एव गृहकार्यं करोति । सः दूषितं कृत्रिमं च खाद्यवस्तु न खादति । सा स्वस्था प्रसन्ना च बालिका वर्तते ।

## लेखनम्

१. अधो लिखितानि पदानि अभ्यासपुस्तिकायां लिखत

गन्तुकामा, प्रत्यागच्छत्, अपाङ्गतायुक्तः, प्रत्यवोचत्, सङ्कीर्णमनाः, श्रीमद्भगवद्गीता, अशृणवम्, दर्शनानन्तरम्, कर्मफल-हेतुः, संसिद्धिः

२. पाठस्थश्लोकानाम् अनुलेखनं कुरुत ।

३. पदानि प्रयुज्य वाक्यानि रचयत

अधिकारः, सङ्गः, कर्म, असक्तः, समाचर, कर्तुम्

४. पाठस्य अन्तिमश्लोकस्य भावार्थं लिखत ।

५. सङ्क्षेपेण उत्तरयत

(क) मानवस्य कस्मिन् अधिकारः अस्ति ?

(ख) मानवस्य कुत्र अधिकारः नास्ति ?

(ग) कीदृशं कर्म करणीयम् ?

(घ) शरीरयात्रायै किं कर्तव्यम् ?

(ङ) मानवः कथं कर्म कुर्वन् परं पदं प्राप्नोति ?

(च) के कर्मणा संसिद्धिम् आस्थिताः ?

(छ) कर्मणः आवश्यकता कुत्र दृश्यते ?

६. अर्थं विलोक्य मञ्जूषातः अनेकार्थिशब्दान् विचित्य रिक्तस्थानं पूरयत

| |
|---|
| **अर्थः, अम्बरम्, कालः, घनः, अङ्कः, जडः, जालम्, चरणः, पादः, तानः** |

**उदाहरणम्**

भाषायाः लिपिः, अनश्वरः च - अक्षरः

वस्त्रम्, गगनम् च -

भागः, सङ्ख्या च -

धनम्, अभिप्रायः च -

समयः, कृष्णः च -

पादः, श्रेणी च -

गणितस्य क्रिया, मेघः च -

निर्जीवः, मूर्खः च -

पाशः, भ्रमः च -

सङ्गीतस्य आलापः, सूत्रं च -

चरणः, चतुर्थांशः च -

## रचनात्मकः अभ्यासः

१. अधो लिखितानां पदानां साहाय्येन पञ्चभिर्वाक्यैः कर्मयोगं वर्णयत

लोकव्यवहारार्थम्, कर्मणः, आवश्यकता, त्यजनीया, फलस्य, आशा, शास्त्रविहितम्, कर्म, विधि-निषिद्धम्, कामना, दुःखस्य, कारणम्, विना, कर्म, असम्भवम्, जीवनम्

२. मञ्जूषातः विपरीतार्थिशब्दान् सञ्चित्य सारिणीं पूरयत

**अनास्था, अनित्यम्, अप्रसन्नः, अनृतम्, अनिष्टः, अधर्मः, अनागतः, अविश्वासः, अनेकम्, अशिक्षितः**

**उदाहरणम्**

सत्यम् - (अ) असत्यम्, अन्तः - (अन्) अनन्तः

| | |
|---|---|
| नित्यम् | |
| ऋतम् | |
| धर्मः | |
| आस्था | |
| प्रसन्नः | |

| | |
|---|---|
| इष्टः | |
| शिक्षितः | |
| एकम् | |
| विश्वासः | |
| आगतः | |

३. 'क' सारिण्याः उदाहरणानि अनुसृत्य 'ख' सारिणीं पूरयत

**'क' सारिणी**

| शब्दः | प्रत्ययः | स्त्रीलिङ्गम् |
|---|---|---|
| सुशील | टाप् (आ) | सुशीला |
| बालक | टाप् (आ) | बालिका |
| शिक्षक | टाप् (आ) | शिक्षिका |

**'ख' सारिणी**

| शब्दः | प्रत्ययः | स्त्रीलिङ्गम् |
|---|---|---|
| गायक | टाप् (आ) | |
| चतुर | टाप् (आ) | |
| विशाल | टाप् (आ) | |
| दक्ष | टाप् (आ) | |
| नायक | टाप् (आ) | |
| निपुण | टाप् (आ) | |
| नवीन | टाप् (आ) | |
| निर्भय | टाप् (आ) | |
| अध्यापक | टाप् (आ) | |
| कुशल | टाप् (आ) | |

## ४. चित्राधारेण वर्णनं कुरुत



**श्रवणपाठः**

कामना - अद्य समाचारपत्रेषु कीदृशाः समाचाराः सन्ति ?

संयमः - अहं वदामि । त्वं श्रवणं कुरु ।

कामना - न, अहं स्वयं पठित्वा ज्ञास्यामि ।

संयमः - शृणोसि चेत् शृश्रु । नो चेत् समाचारपत्राणि तु न यच्छामि ।

कामना - तर्हि, समाचारपत्राणि त्वम् एव पठ ! अहं तु अतिथिकक्षं गत्वा दूरदर्शनयन्त्रे पश्यामि । सम्प्रति नेपाल-दूरदर्शने वाचकः समाचारं वाचयति ।

साधना - अहम् अपि गच्छामि ।

संयमः - (हसित्वा) अहो ! विद्युत् गतवती नास्ति ? तर्हि तु अहं व्यङ्ग्यचित्रं द्रक्ष्यामि ।

कामना - संयम ! किं कथयसि ? सर्व तव इच्छानुसारं चलति ? आवयोः इच्छायाः स्थानं नास्ति किम् ?

साधना - कामने ! त्वम् उचितम् अवदः । संयम ! आवां समाचापत्राणि अवश्यं पठिष्यावः, परन्तु दूरदर्शनं सन्दृश्य एव ।

कामना - आम्, ततः आगत्य आवां पठिष्यावः । अतः सम्प्रति त्वं व्यङ्ग्यचित्रं द्रष्टुं न शक्नोसि ।

साधना - अस्तु, गच्छाव ।

## षष्ठः पाठः

# सम्मानपत्रम्

**पाठं पठित्वा मित्रैः सह विमर्शनं कुरुत**

सञ्जिताचौधरी ग्रामे वसति । तस्याः परिवारे सप्त सदस्याः सन्ति । परिवारस्य सदस्याः कृषिकार्यं कुर्वन्ति । ते **धान्यम्**, **गोधूमम्**, **व्यञ्जनानि** च उत्पादयन्ति । ते **आदिवसं** क्षेत्रे कार्यं कुर्वन्ति । सञ्जितायाः परिवारः क्षेत्रे **रासायनिकस्य** मलस्य प्रयोगं न करोति । गृहे **गावः**, **वृषाः**, **अजाः** च पालिताः सन्ति । कृषिक्षेत्रे तेषां पशूनां मलं प्रयुज्यते । तेन उत्पादनं वर्धते, तदुत्पादनं **सुस्वादु** च भवति । एकदा सञ्जिता विद्यालयाद् आगम्य मातुः निकटे अवसत् । मातुः हस्ते एकं पत्रम् आसीत् । यथा-

**त्रिशक्ति-महिला-सहयोग-समूहः**

**सम्मानपत्रम्**

फूलमती-चौधरी-**महोदया**
दाङ-जनपदस्य श्रीपुर-निवासिनि
बहोः कालात् स्वास्थ्यकराणां व्यञ्जनानाम् उत्पादनेन जनस्वास्थ्यस्य संरक्षणाय विहितस्य योगदानस्य कृते पञ्चसहस्रैः रुप्यकैः सह भवती **सम्मान**यामः ।

**धुनियादेवी महतो**

२०७८ मकरसङ्क्रान्तिः, माघीदिवसश्च **अध्यक्षा**

सञ्जिता पत्रम् अपठत् । सा 'त्रिशक्तिः' पदस्य अर्थं न अजानात् । सा तस्य अर्थं कथयितुं **न्यवेदयत्** । पितामहः त्रीन् प्रश्नान् अपृच्छत् । सञ्जिता प्रतिप्रश्नम् एकपदेन उदतरत् ।

| | पितामहः | सञ्जिता |
|---|---|---|
| (क) | विजयादशम्यां कस्याः पूजनं भवति ? | दुर्गाभवान्याः |
| (ख) | दीपावल्यां का पूज्यते ? | लक्ष्मीः |
| (ग) | श्रीपञ्चम्यां कां पूजयसि ? | सरस्वतीम् |

पितामहः पुनः अवदत्, "सत्यं पौत्रि, एतासां देवीनां समाहारः एव त्रिशक्तिः कथ्यते । सर्वाः महिलाः शक्तिरूपिण्यः भवन्ति । एतस्मिन् विषये कथां **श्रावयित्वा** त्वां सन्तोषयसि ।"

सञ्जिता चौधरी गाउँमा बस्छिन् । उनको परिवारमा सात जना छन् । उनीहरू खेती गर्छन्  उनीहरू धान, गहुँ र तरकारी उत्पादन गर्छन् । उनीहरू खेतबारीमा रासायनिक मलको प्रयोग गर्दैनन् । उनीहरूले गाईगोरु र बाख्रा पालेका छन् । तिनकै मल प्रयोग गर्दछन् । त्यसबाट उत्पादन बढेको छ । स्वादिलो पनि भएको छ ।

एक दिन सञ्जिता विद्यालयबाट आएर आमाको छेउमा बसिन् । आमाको हातमा एउटा पत्र थियो । त्यो यस्तो थियो-

**त्रिशक्ति महिला सहयोग समूह**

**सम्मानपत्र**

फूलमती चौधरीज्यू,
श्रीपुर, दाङ ।
लामो समयदेखि स्वास्थ्यकर तरकारी उत्पादन गरेर जनस्वास्थ्यको संरक्षणमा गर्नुभएको योगदानका लागि रु. पाँच हजारसहित सम्मान गर्दछौँ ।

**धुनियादेवी महतो**

२०७८ मकरसङ्क्रान्ति तथा माघीदिवस **अध्यक्ष**

सञ्जिताले पत्र पढिन् । उनले 'त्रिशक्ति' पदको अर्थ जानिनन् । उनले त्यसको अर्थ भनिदिन हजुरबुबालाई निवेदन गरिन् । हजुरबुबाले तीन प्रश्न सोध्नुभयो । सञ्जिताले प्रत्येक प्रश्नको एक शब्दमा उत्तर दिइन् ।

| हजुरबुबा | सञ्जिता |
| --- | --- |
| (क) दसैँमा कसको पूजा हुन्छ ? | दुर्गाभवानीको |
| (ख) दीपावलीमा कसको पूजा गरिन्छ ? | लक्ष्मीको |
| (ग) श्रीपञ्चमीमा कसको पूजा गर्छ्यौ ? | सरस्वतीको |

हजुरबुबाले फेरि भन्नुभयो, "ठिक भन्यौ नातिनी, यी देवीको संयुक्त रूपलाई नै त्रिशक्ति भनिन्छ । सबै महिला शक्तिरूपिणी हुन्छन् । यसबारे म कथा सुनाउँछु । त्यो सुनेर तिमी खुसी हुने छ्यौ ।"

# विजयिनी शक्तिः



शङ्करः तपसि लीनः आसीत् । देवाः भगवन्तं शङ्करं तपसः विचालयितुम् ऐच्छन् । एतदर्थं देवराजः इन्द्रः कामदेवस्य साहाय्यम् अयाचत । कामदेवः तपः भङ्क्तुं प्रायतत परं सफलः न अभवत् । शङ्करः स्वस्य तृतीयनेत्रेण कामदेवम् एव अदहत् । हिमालयस्य पुत्री पार्वती शङ्करं पतिं वरितुम् इच्छति स्म । स्वस्य पुरतः कामदेवस्य दहनं दृष्ट्वा तस्याः मनोरथः शिथिलः अभवत् ।

पार्वती तपसा शङ्करं पतिरूपेण प्राप्तुम् ऐच्छत् । सा स्वेच्छां मातरं मेनाम् अकथयत् । माता पार्वत्यै तपः आचरितुम् अनुमतिं न अदात् । पार्वत्याः इच्छा बलवती आसीत् । सा स्वसङ्कल्पं त्रोटयितुं न ऐच्छत् । सा तपश्चर्यायै गौरीशिखरम् अगच्छत् ।

ऋषीणाम् इव पार्वती तपः प्रारभत । वेशेन कर्मणा मनसा च सा कठोरं तपः आचरत् । सा भोजनम् अत्यजत् । वृक्षात् स्वयं पतितानि पत्राणि अपि पार्वती न अखादत् । तेन तस्याः नाम अपर्णा च अजायत ।

एकदा कश्चन ब्रह्मचारी वटुः पार्वत्याः कुटीरम् आगच्छत् । सः पार्वत्याः अवस्थायाः तपश्चर्यायाश्च विषये अपृच्छत् । ब्रह्मचारी तपसः कारणं ज्ञातुम् अपि ऐच्छत् । पार्वती शिष्टाचारेण ब्रह्मचारिणम् अभ्यार्थयत् । सः पार्वत्याः सखीभ्यः तपसः कारणं च अबुध्यत ।

ब्रह्मचारी कठोरैः वचनैः शङ्करम् अनिन्दत् । सः शङ्करं कुलेन, रूपेण, धनेन च हीनम् अवदत् । सः पार्वतीम् अवोचत्, "त्वाम् शङ्करस्य पत्नीरूपेण दृष्ट्वा लोकः उपहसिष्यति ।

शङ्करे वरेषु अपेक्षितः एकः अपि गुणः नास्ति ।" ब्रह्मचारी पुनः अवदत्, "पार्वति ! शङ्करेण सह विवाहस्य इच्छया त्वं शोचनीयां दशां प्राप्तः ।"

शङ्करस्य निन्दया पार्वती विचलिता न अभवत् । शङ्करस्य निन्दया पार्वत्याः तं प्रति भक्तिः रतिः च इतोऽपि अवर्धताम् । ब्रह्मचारी पुनः शङ्करस्य निन्दां प्रारभत । तां श्रोतुम् अनिच्छुका पार्वती अन्यत्र गन्तुम् उद्यता अभवत् । तस्मिन् एव क्षणे सहसा ब्रह्मचारी स्वरूपं परिवर्त्य शङ्करस्य स्वरूपं अदर्शयत् । तत् दृष्ट्वा पार्वती सातिशयं चकिता अभवत् । सा न स्थातुं न च चलितुम् अशक्नोत् । पार्वती भृशम् अमोदत । प्रसन्नः शङ्करः सस्मितम् अवदत्, "अहं तव तपसा क्रीतः **दासः** अस्मि ।" इत्थं सर्वैः अविजेयं शङ्करस्य मनः तपःशक्त्या विजित्य पार्वती तं पतिम् अवृणोत् । सा महिलानां **कियती** शक्तिः भवति इति च असाधयत् ।

देवताहरूले तपस्यामा लीन भगवान् शङ्करको तपस्यामा विघ्न पुऱ्याउन खोजे । देवराज इन्द्रको अनुरोधअनुसार कामदेवले शङ्करको तपस्या भङ्ग गर्न खोजे । शङ्करले तेस्रो नेत्रले कामदेवलाई भस्म गरे । त्यो देखेर शङ्करलाई पतिका रूपमा वरण गर्न चाहने पार्वतीको इच्छा शिथिल भयो ।

पार्वती आमा मेनाले रोक्तारोक्तै पनि गौरीशिखरमा गएर कठोर तपस्या गर्न थालिन् । शिवलाई पतिका रूपमा पाउनका लागि उनी सखबाट आफैँ खसेका पातसमेत खान छोडिन् ।

एक दिन एक जना ब्रह्मचारी वटु पार्वतीको कुटीमा आए । उनले पार्वतीका सँगीबाट पार्वतीले तपस्या गर्नुको कारण थाहा पाए । त्यसपछि ब्रह्मचारी शङ्करको निन्दा गर्न थाले । उनले शङ्करका बारे भन्नु नभन्नु भने । ब्रह्मचारीले पार्वतीलाई भने, "शङ्करसँग विवाह गऱ्यौ भने तिमीहरूको जोडी देखेर लोक हाँस्नेछ ।"

पार्वतीले शङ्करका विषयमा ब्रह्मचारीले गरेको निरन्तर निन्दा सुन्न सकिनन् । उनी अन्तै जान खोजिन् । त्यसै बेला ब्रह्मचारीले शङ्करको रूप बदलेर पार्वतीलाई दर्शन दिए । पार्वती अक्क न बक्क परिन् । उनी न हिँड्न सकिन् न त अड्न नै सकिन् । उनमा इच्छा पूरा भएकोमा खुसीको सीमा रहेन । शङ्करले हाँस्दै भने, "म तिम्रो तपस्याले किनेको दास हुँ ।" पार्वतीले तपस्याद्वारा कसैले जित्न नसकेको शङ्करको मन जितिन् । उनले महिलामा भएको शक्ति देखाएर प्रमाणित गरिन् ।

शब्दार्थाः

| | | | |
|---|---|---|---|
| धान्यम् | व्रीहिः | धान | Paddy |
| गोधूमम् | सुमनाः | गहुँ | Wheat |
| व्यञ्जनानि | शाकादिहरित-खाद्यवस्तूनि | तरकारी | Green vegetables |
| आदिवसम् | पूर्णदिनम् | दिनभरि | Whole day |
| रासायनिकस्य | रसायनेन निर्मितस्य | रसायनले बनेको | Chemical |
| गावः | धेनवः | गाईहरू | Cows |
| वृषाः | वृषभाः | गोरुहरू | Oxen |
| अजाः | छागयः | बाख्रा | Goats |
| सुस्वादु | स्वादिष्टम् | स्वादिलो | Tasty |
| त्रिशक्तिः | महाकाली-महालक्ष्मी-महासरस्वतीनाम् संयुक्तशक्ति-स्वरूपम् | तीन देवीहरूको संयुक्त शक्ति | Combination of three Goddesses : Mahakali, Mahalaxmi and Mahasaraswati |
| महोदयाः | महानुभावाः | आदरणीय महिला | Respected madam |
| सम्मानयामः | सम्मानम् कुर्मः | सम्मान गर्दछौँ | We (many) honour |
| न्यवेदयत् | निवेदनम् अकरोत् | निवेदन गऱ्यो | Requested |
| पितामहः | पितुः पिता | हजुरबुबा | Grandfather |
| समाहारः | एकीभवनम् | समूह | Combination |
| लीनः | मग्नः, मिलेको | एकाकार भएको | Immensed |
| देवराजः | देवानाम् राजा, इन्द्रः | देवताका राजा, इन्द्र | King of Gods |
| कामदेवः | मदनः, रतिपतिः | प्रेमका देवता | God of love |

| | | | |
|---|---|---|---|
| साहाय्यम् | सहयोगः | सहयोग, सहायता | Help, Co-operation |
| प्रायतत | प्रयत्नम् अकरोत् | प्रयास गर्‍यो | Tried |
| अदहत् | भस्मसात् अकरोत् | डढायो | Burned |
| वरितुम् | स्वीकर्तुम् | वरण गर्न | To choose |
| दहनम् | भस्मसात्करणम् | डढाउनु | Burning |
| मनोरथः | इच्छा | कामना | Desire |
| शिथिलः | दुर्बलः | कमजोर भएको | Loose, Slack |
| स्वेच्छा | स्वस्य इच्छा | आफ्नो इच्छा | One's own wish |
| आचरितुम् | अभ्यासं कर्तुम् | आचरण गर्न, अभ्यास गर्न | To conduct |
| अनुमतिः | आज्ञा | स्वीकृति | Permission |
| सङ्कल्पः | प्रतिज्ञा | वाचा | Determination |
| त्रोटयितुम् | भङ्क्तुम् | टुटाउन | To break |
| तपश्चर्या | तपः | तपस्या | Penance |
| ऋषीणाम् | मुनीनाम् | ऋषिहरूको | Of the Saints |
| वेशः | परिधानम् | लुगाकपडा | Dress |
| आचरत् | अकरोत् | गर्‍यो | Conducted |
| पतितानि | भ्रष्टानि | झरेका | Fallen |
| अपर्णा | पत्ररहिता, पार्वती | पातसमेत नखाने पार्वती | Goddess Parbati who did not eat even leaves self fallen |
| ब्रह्मचारी वटुः | ब्रह्मचर्यस्य पालकः बालकः युवकः वा | विवाह नगरेको वेद पढ्ने बालक वा युवा | Young boy at the first stage of the four life |
| कुटीरः | कुटिः | स्याउले कटेरो | Cottage |
| अभ्यार्थयत् | स्वागतम् अकरोत् | स्वागत गर्‍यो | Welcommed |

| | | | |
|---|---|---|---|
| सखी | सहचरी | महिला साथी | Female friend |
| अबुध्यत | अजानात् | बुझ्यो | Knew |
| अनिन्दत् | अभर्त्सयत् | निन्दा गऱ्यो | Spoke evil of |
| वरेषु | विवाहयोग्येषु | विवाह गर्न योग्य कुमारहरूमा | Among bridegrooms |
| अपेक्षितः | इष्टः | चाहेको | Expected |
| गुणः | विशेषता | क्षमता, गुण | Quality, Virtue |
| शोचनीयः | चिन्तनीयः | विचार गर्नुपर्ने | Thinkable |
| दशा | अवस्था | स्थिति | Condition |
| रतिः | प्रेम | माया | Love |
| अवर्धताम् | वृद्धिम् प्राप्तौ | (दुई) बढे | (Two) Grew |
| उद्यता | तत्परा | तयार भएकी | Ready to |
| सहसा | हठात् | अचानक | Suddenly |
| परिवर्त्य | परिवर्तनम् कृत्वा | परिवर्तन गरेर | Having chanded |
| अदर्शयत् | दर्शयामास | देखायो | Showed |
| सातिशयम् | अत्यन्तम् | धेरै | Very much |
| भृशम् | अत्यन्तम् | धेरै | Very much |
| अमोदत | अतुष्यत् | खुसी भयो | Felt pleasure |
| स्मितेन | मन्दहासेन | मुस्कुराएर | With a smile |
| दासः | सेवकः | कमारो | Slave |
| विजित्य | जित्वा | जितेर | Having Conqured |
| अवृणोत् | वरणम् अकरोत् | वरण गऱ्यो | Chose |
| कियती | कति (स्त्री) | कति | How much |
| असाधयत् | सिद्धम् अकरोत् | सिद्ध गऱ्यो | Proved |

## अभ्यासः

### श्रवणं भाषणं च

१. पाठस्य प्रथमम् अनुच्छेदम् श्रुत्वा सञ्जितायाः परिवारस्य विषये वदत ।

२. शिक्षकस्य साहाय्येन सामूहिकस्वरेण उच्चारयत

ग्रामे, श्रीपुरे, कृषिः, क्षेत्रे, प्रयुज्यते, पत्रम्

३. शिक्षकात् श्रुत्वा अनुवाचयत

त्रिशक्तिः, सम्मानपत्रम्, श्रीपुरनिवासिनी, पञ्चसहस्रैः

४. अधो लिखितानि वाक्यानि श्रुत्वा कथयितुः नामानि कथयत

(क) विजयादशम्यां कस्याः पूजनं भवति ?

(ख) लक्ष्मीः ।

(ग) "एतासां देवीनां समाहारः एव त्रिशक्तिः कथ्यते ।"

(घ) "सर्वाः महिलाः च शक्तिरूपिण्यः भवन्ति ।"

५. मञ्जूषायाः अनुच्छेदं श्रुत्वा उत्तरम् वदत

(क) समूहस्य पूर्णं नाम किम् ?

(ख) सम्मानिता व्यक्तिः का ?

(ग) फूलमती-चौधरी कुत्र वसति ?

(घ) सम्माने कति रूप्यकाणि सन्ति ?

(ङ) धनियादेवी महतो का ?

६. अधो लिखितानि क्रियापदानि श्रुत्वा तेषु सर्वेषु प्रयुक्तं समानवर्णं वदत

वसति, वर्तते, सन्ति, कुर्वन्ति, करोति, प्रयुज्यते, वर्धते, भवति, आगच्छन्ति, अवसत्, अपठत्, अजानात्, आसीत्, न्यवेदयत् ।

७. पितामहस्य सञ्जितायाः च वार्तां श्रुत्वा एकवाक्येन उत्तरयत

(क) विजयादशमी-पर्वणि कस्याः पूजनं भवति ?

(ख) लक्ष्मीः कदा पूज्यते ?

(ग) श्रीपञ्चम्यां किं क्रियते ?

(घ) त्रिशक्तेः स्वरूपं किम् ?

(ङ) पितामहः सञ्जितां कथं समतोषयत् ?

९. शिक्षकात् अधो लिखितान् प्रश्नान् श्रुत्वा अतिसङ्क्षेपेण उत्तरं दत्त

(क) तव गृहं ग्रामे नगरे वा कुत्र अस्ति ?

(ख) तव परिवारे कति सदस्याः सन्ति ?

(ग) त्वं कस्यां कक्षायां पठसि ?

(घ) तव गृहे पशुः पशवः सन्ति न वा ?

(ङ) तुभ्यं कीदृशं व्यञ्जनं रोचते ?

(च) तव गृहे सञ्चारस्य कानि उपकरणानि सन्ति ?

१०. श्रवणपाठं श्रुत्वा प्रश्नान् उत्तरयत

**(क) समुचितविकल्पं विचित्य प्रश्नान् उत्तरत**

(अ) के वीराः भवन्ति ?

१. शत्रवः २. सैनिकाः ३. कातराः ४. भीताः

(आ) यः युद्धात् पलायनं करोति सः कः अस्ति ?

१. मनुष्यः २. दानवः ३. कातरः ४. देवः

**(ख) पूर्णवाक्येन उत्तरत**

(अ) सैनिकाः कस्य रक्षार्थं प्रत्यहं जागरिताः भवन्ति ?

(आ) वीराणां कीर्तिः कुत्र प्रसृता भवति ?

(इ) कस्य सम्मानं सर्वत्र भवति ?

(ई) शत्रवः अपि कं प्रसंशन्ति ?

पठनम्

## १. अधो लिखितं गद्यांशं वाचयत

इयं धरणी चिराय विविधाभिः महिलाभिः शोभिता वर्तते । ताः महिलाः नारीरत्नानि कथ्यन्ते । सत्कर्मणा पावनचरित्रेण च ताः यशः अलभन्त । तासां जीवनचरितेन वयं प्रेरिताः भवामः । तासु गार्गी प्रसिद्धा विदुषी आसीत् । तदा मिथिलायां जनकः राज्यं करोति स्म । स ज्ञानी आसीत् । जनकस्य प्रासादे वारं वारं ज्ञानसभा आयोज्यते स्म । तत्र महर्षिः याज्ञवल्क्यः प्रधानः ज्ञानी आसीत् । ज्ञानेन न कोऽपि याज्ञवल्क्यं जेतुं शक्नोति स्म । गार्गी तेन सह प्रश्नोत्तरं विधाय स्वस्य वैदुष्यं प्राकाशयत् । गार्गी अधुना अपि ज्ञानभरितायाः महिलायाः रूपेण स्मर्यते ।

यो धर्ती लामो समयदेखि नारीरत्नहरूबाट सुशोभित छ । तिनीहरूको जीवनचरित्रबाट हामी सधैँ प्रेरित हुन्छौँ । मिथिलाका राजा जनकको समयकी गार्गी यस्तै प्रसिद्ध विदुषी थिइन् । जनकको दरबारमा बारम्बार ज्ञानसभा हुने गर्थ्यो । त्यहाँ महाज्ञानी महर्षि याज्ञवल्क्य थिए । उनलाई ज्ञानमा कसैले जित्न सक्तैनथ्यो । गार्गीले याज्ञवल्क्यसँग प्रश्नोत्तर गरेर आफ्नो वैदुष्यको परिचय दिइन् । गार्गी अहिले पनि ज्ञानी महिलाका रूपमा स्मरणीय छन् ।

## २. प्रदत्तम् अनुच्छेदं पठित्वा नामानि लिखत

महर्षेः याज्ञवल्क्यस्य द्वे पत्न्यौ आस्ताम् - कात्यायनी मैत्रेयी च । स ताभ्यां सह सुखेन दिनानि अनयत् । कालक्रमेण याज्ञवल्क्यः वृद्धः अभवत् । सः संन्यासम् अवलम्बितुम् व्यचारयत् । पत्नीद्वयम् आहूय याज्ञवल्क्यः अवदत्, "अहं संन्यासम् आचरिष्यामि, सर्वाः सम्पदः युवाभ्याम् आवण्टयितुम् इच्छामि । युवयोः कः विचारः ?" तत् श्रुत्वा कात्यायनी मौनम् अतिष्ठत् । मैत्रेयी अवदत्, "स्वामिन् ! एताभिः सम्पद्भिः सुखं शान्तिः च लभ्येते ? लभ्येते चेत् भवान् कथम् इमाः परित्यज्य संन्यासम् आचरितुम् तत्परः अस्ति ? एताः मह्यम् अमरत्वम् प्रदास्यन्ति ?" मैत्रेय्याः वचनं श्रुत्वा याज्ञवल्क्यः अतुष्यत् । सः ज्ञानस्य प्रचारं कर्तुं ताम् आदिदेश ।

महर्षि याज्ञवल्क्यका कात्यायनी र मैत्रेयी दुइटी पत्नी थिए । दिन बित्दै जाँदा याज्ञवल्क्य बुढा भए । दुवै पत्नीलाई बोलाएर उनले भने, "म संन्यास आश्रममा जान लागेको छु । सबै सम्पत्ति तिमीहरूलाई बाँडिदिन खोजेको छु । के विचार छ ?" कात्यायनी चुप रहिन् । मैत्रेयीले भनिन्, "स्वामी, यी सम्पत्तिले सुखशान्ति पाइन्छ ? पाइने भए हजुर किन यिनलाई छोडेर संन्यासमा जान लाग्नुभएको छ ? के यी सम्पत्तिबाट म अमर बन्न सक्छु ?" मैत्रेयीको कुरा सुनेर याज्ञवल्क्य खुसी भए । उनले मैत्रेयीलाई ज्ञानको प्रचार गर्न आदेश दिए ।

**प्रश्नाः**

(क) याज्ञवल्क्यस्य द्वे पत्न्यौ के ?

(ख) याज्ञवल्क्यः किं व्यचारयत् ?

(ग) याज्ञवल्क्यः सर्वाः सम्पदः किं कर्तुम् ऐच्छत् ?

(घ) "एताः मह्यम् अमरत्वं प्रदास्यन्ति ?" इति कस्याः प्रश्नः ?

(ङ) याज्ञवल्क्यः मैत्रेयीं किं कर्तुम् आदिदेश ?

३. 'याज्ञवल्क्यः, आवण्टयितुम्, श्रुत्वा, मैत्रेयी, प्रदास्यन्ति, श्रुत्वा' चेति पदैः निर्मितानि वाक्यानि पुनः पठत ।

४. अनुच्छेदस्य मौनपठनं कृत्वा याज्ञवल्क्यस्य चरितं वर्णयत ।

५. अधो लिखितं व्यक्तिगतं विवरणं पठित्वा प्रश्नान् उत्तरयत

अरुन्धती कर्दमस्य पुत्री आसीत् । पर्वतः देवर्षिः नारदश्च तस्याः अग्रजौ आस्ताम् । अरुन्धत्या विवाहः महर्षिणा वसिष्ठेन सह अभवत् । तस्याः शतं पुत्राः अजायन्त । तेषु एकस्य पुत्रस्य नाम शक्तिः आसीत् । अरुन्धती देवीनाम् अष्टोत्तरशतस्य नाम्नां जपम् अकरोत् । तेन सा उत्तमसिद्धिं प्रापत् । अरुन्धती स्थायिनः विवाहसम्बन्धस्य प्रतीकरूपिणी मन्यते । विवाहस्य समये वरवधूभ्याम् आकाशे अरुन्धतीनक्षत्रस्य दर्शनं कार्यते । अनेन कार्येण दाम्पत्यसम्बन्धः अखण्डः भवति इति विश्वस्यते ।

अरुन्धती कर्दमकी पुत्री थिइन् । पर्वत र देवर्षि नारद उनका दाजु थिए । अरुन्धतीको विवाह महर्षि वसिष्ठसँग भएको थियो । उनीहरूका सय छोरा थिए । तीमध्ये एक जना छोराको नाम शक्ति थियो । अरुन्धतीले देवीको एक सय आठ नामको जप गरिन् । त्यसबाट उनलाई उत्तमसिद्धि प्राप्त भयो । अरुन्धती स्थायी विवाह सम्बन्धकी प्रतीक मानिन्छिन् । विवाहमा वरवधूलाई आकाशमा अरुन्धती नक्षत्रको दर्शन गराइन्छ । यसबाट दाम्पत्य सम्बन्ध अखण्ड रहन्छ भन्ने विश्वास गरिन्छ ।

(क) अरुन्धत्याः पितुः नाम

(ख) पर्वतस्य नारदस्य च अनुजा

(ग) वशिष्ठस्य पत्नी

(घ) अरुन्धत्याः वशिष्ठस्य च पुत्राणां सङ्ख्या

(ङ) देवीनां नाम्नां सङ्ख्या

(च) स्थायिनः विवाहसम्बन्धस्य प्रतीकरूपिणी

(छ) विवाहे दर्शनीयस्य नक्षत्रस्य नाम

(ज) अरुन्धत्याः वशिष्ठस्य च एकस्य पुत्रस्य नाम

(झ) देवर्षिः

(ञ) महर्षिः

६. अधो लिखितां सारिणीं सम्पठ्य परस्परं योजयत

सञ्जिता विद्यालये पठति । पितामहः विद्यालये अपठत् । पार्वती शक्तिरूपिणी आसीत् । महिला शक्तिस्वरूपा अस्ति ।

छात्रः अनुशासनम् आचरति । पार्वती तपः आचरत् । छात्रा विदुषी भवति । गार्गी विदुषी अभवत् ।

पितामहः कथां वदति । याज्ञवल्क्यः ज्ञानम् अवदत् ।
जनानां पुत्राः जायन्ते । अरुन्धत्याः वसिष्ठस्य च पुत्राः अजायन्त ।

| ‘क’ खण्डः | ‘ख’ खण्डः |
|---|---|
| पितामहः विद्यालये | आचरत् |
| पार्वती तपः | वदति |
| सञ्जिता विद्यालये | जायन्ते |
| गार्गी विदुषी | भवति |
| छात्रा विदुषी | अपठत् |
| छात्रः अनुशासनम् | अस्ति |
| पार्वती | अभवत् |
| याज्ञवल्क्यः ज्ञानम् | आचरति |
| जनानां पुत्राः | पठति |
| अरुन्धत्याः वसिष्ठस्य च पुत्राः | अवदत् |
| पितामहः कथाम् | अजायन्त |
| महिला शक्तिस्वरूपा | आसीत् |

७. अधो लिखितां लघुकथां पठित्वा प्रश्नान् उत्तरयत

शबरी शबरजातेः उत्पन्ना कन्या आसीत् । तस्याः पिता राजा आसीत् । शबर्याः विवाहस्य समयः आगतः । तत्र पशुहिंसायाः कार्यं निर्धारितम् आसीत् । शबरी तत् द्रष्टुं न अशक्नोत् । विवाहं कर्तुम् अनिच्छुका शबरी वनम् अगच्छत् । वने सा मतङ्ग-ऋषेः आश्रमस्य स्वच्छीकरणम् अकरोत् । तदा रामः वनवासे आसीत् । सीतायाः अन्वेषणस्य क्रमे रामः लक्ष्मणेन सह तत्र आगच्छत् । मतङ्ग-ऋषिः दिवङ्गतः आसीत् । शबरी रामम् अवदत्, “अहम् ऋषेः आदेशस्य अनुसारेण भवतः प्रतीक्षायाम् अस्मि ।” सा

रामलक्ष्मणौ खादयितुं वनात् बदरीफलानि आनयत् । रामलक्ष्मणाभ्याम् अर्पयितुम् सा स्वादं परीक्ष्य मधुराणि विचित्य च फलानि एकत्र अस्थापयत् । रामः लक्ष्मणश्च भक्त्या तानि अर्पितानि फलानि अखादताम् । कस्यापि भेदभावबुद्ध्या तदा पम्पासरसः जलं कीटमयं रक्तवर्णं च जातं आसीत् । शबर्याः स्पर्शेन तद् जलम् पुनः शुद्धं स्वच्छं च अभवत् । रामस्य अनुज्ञां प्राप्य सा स्वर्गम् अगच्छत् ।

शबरी शबरजातिकी कन्या थिइन् । उनका पिता राजा थिए । शबरीको विवाहमा पशुहिंसा हुने भयो । त्यो देख्न नसक्ने शबरी विवाह छोडेर वन गइन् । वनमा उनी मतङ्ग ऋषिको आश्रमको सरसफाइ गर्थिन् । त्यस बेला राम वनवासमा थिए । सीताको खोजी गर्दै राम लक्ष्मणसहित त्यहाँ आए । मतङ्ग ऋषि दिवङ्गत भइसकेका थिए । शबरीले रामलाई भनिन्, "म ऋषिको आदेश अनुसार तपाईंको प्रतीक्षामा थिएँ ।" उनले राम लक्ष्मणलाई खुवाउन वनबाट बयर ल्याएकी थिइन् । उनी बयर चाख्थिन् । मिठा जति छानेर राम लक्ष्मणका लागि राखेकी थिइन् । रामले ती बयर खाए । कसैले भेदभाव गरेकाले त्यस बेला पम्पासरको जलमा किरा परेको थियो । पानी पनि रातो थियो । शबरीले छोएपछि त्यहाँको जल शुद्ध र स्वच्छ भयो । रामको अनुमति पाएर शबरी स्वर्ग गइन् ।

(क) शबरी का आसीत् ?

(ख) शबरी किमर्थं वनम् अगच्छत् ?

(ग) शबरी ऋषेः आश्रमे किम् अकरोत् ?

(घ) शबरी वनात् किम् आनयत् ?

(ङ) रामः लक्ष्मणश्च कीदृशानि फलानि अखादताम् ?

(च) पम्पासरसः जलं कीदृशम् आसीत् ?

(छ) शबर्याः स्पर्शेन पम्पासरसः जलं कीदृशम् अभवत् ?

(ज) शबरी कुत्र अगच्छत् ?

## ८. अधो लिखितैः पदैः निर्मितानि वाक्यानि पुनः पठत

तद् द्रष्टुम्, आश्रमस्य स्वच्छीकरणम्, सीतायाः अन्वेषणस्य, भवतः प्रतीक्षायाम्, रामलक्ष्मणाभ्याम् अर्पयितुम्, कीटमयं रक्तवर्णं च, अनुज्ञां प्राप्य ।

९. सूत्राणि पठित्वा तदनुकूलानां चरितानां नामानि कथयत

(क)

शबरकन्या

विवाहस्य समयः

पशुहिंसायाः विरोधः

वनगमनम्

(ख)

सीतायाः अन्वेषणे संलग्नः

लक्ष्मणेन सह चलनम्

शबर्यै अनुज्ञाप्रदानम्

(ग)

भ्रातृप्रेम

सह एव चलनम्

बदरीफलभक्षणम्

शबर्याः आश्रमे आगमनम्

**लेखनम्**

१. इमानि पदानि लिखत

एतदर्थम्, साहाय्यम्, प्रायतत, वरितुम्, स्वेच्छाम्, स्वसङ्कल्पम्, पत्राणि, ब्रह्मचारी वटुः, तपश्चर्यायाः, अभ्यार्थयत्, अबुध्यत, अवर्धताम्, परिवर्त्य, भृशम्, अवृणोत्, असाधयत्

२. 'विजयिनी शक्तिः' इति कथायाः प्रथमस्य अनुच्छेदस्य अनुलेखनं कुरुत ।

३. पदानि प्रयुज्य वाक्यानि रचयत

ऐच्छन्, दहनम्, मनोरथः, तपश्चर्या, ब्रह्मचारी वटुः, शिष्टाचारेण, वरेषु, रतिः, सातिशयम्, चकिता, अमोदत, विजित्य, महिलानाम्

४. मञ्जूषातः उचितानि लेख्यचिह्नानि प्रयुज्य पुनर्लेखनं कुरुत

पार्वती तपः आचरितुम् ऐच्छत् सा मातरम् अवदत् मातः अहम् तपश्चरितुं गच्छामि माता अनुज्ञां न अदात् माता अवोचत् कथम् तपः करिष्यसि पार्वती तपः अकरोत् सा शङ्करं पतिं प्रापत् शङ्करः अवदत् पार्वति अहं तव तपसा क्रीतः दासः अस्मि पार्वती प्रसन्नहृदया अभवत् ।

| | | | | |
|---|---|---|---|---|
| (क) । | (ख) , "…….।" | (ग) । | (घ) , "….. ?" | (ङ) । |
| (च) । | (छ) , "….! …।" | (ज) । | | |

५. 'विजयिनी शक्तिः' इति कथायाः अन्तिमस्य अनुच्छेदस्य भावार्थं प्रकाशयत ।

६. सङ्क्षेपेण उत्तराणि लिखत

(क) शङ्करः कम् अदहत् ?

(ख) पार्वती किम् इच्छति स्म ?

(ग) पार्वती कुत्र अगच्छत् ?

(घ) पार्वती किम् आचरत् ?

(ङ) पार्वत्याः कुटीरं कः आगच्छत् ?

(च) ब्रह्मचारी कम् अनिन्दत् ?

(छ) कुलेन, रूपेण, धनेन च हीनः कः ?

(ज) पार्वती किं श्रोतुं न ऐच्छत् ?

(झ) ब्रह्मचारी कस्य स्वरूपम् अदर्शयत् ?

(ञ) शङ्करः पार्वतीं किम् अकथयत् ?

७. युगलक्रियापदानाम् उदाहरणानि विलोक्य रिक्तस्थानं पूरयत

| | |
|---|---|
| (क) अस्ति, आसीत् | (ख) याचते, अयाचत |
| (ग) यतते, अयतत | (घ) दहति, अदहत् |
| (ङ) भवति, अभवत् | (च) ददाति, अददात् |
| (छ) त्यजति, अत्यजत् | (ज) गच्छति, अगच्छत् |
| (झ) आगच्छति, आगच्छत् | (ञ) पृच्छति, अपृच्छत् |
| (ट) निन्दति, अनिन्दत् | (ठ) वर्धते, अवर्धताम् |
| (ड) दर्शयति, अदर्शयत् | (ढ) मोदते, अमोदत |
| (ण) वृणोति, अवृणोत् | (थ) साधयति, असाधयत् |

| | | | |
|---|---|---|---|
| याचते, ........ | ........, अदहत् | गच्छति, ........ | ........, आगच्छत् |
| ........, अनिन्दत् | वर्धते, ........ | पृच्छति, ........ | ........, अमोदत |
| वृणोति, ........ | ........, असेधयत् । | | |

८. शिक्षकस्य साहाय्येन अधो लिखितानि अव्ययपदानि प्रयुज्य वाक्यानि रचयत

सातिशयम्, भृशम्, इत्थम्, पुनः ।

## रचनात्मकः अभ्यासः

१. अनुच्छेदं पठित्वा पदानि मेलयत

वने हस्ती हस्तिनी च वसतः । मयूरः मयूरी च नृत्यतः । शशकः शशकी च धावतः । व्याघ्रः व्याघ्री च पश्यतः । जले मत्स्यः मत्सी च चलतः । कच्छपः कच्छपी च खादतः । रथे राजा राज्ञी च तिष्ठतः । मानी मानिनी च वदतः । पुरुषः नगरस्य निवासी अस्ति । महिला नगरस्य निवासिनी अस्ति ।

| खण्डः 'क' | खण्डः 'ख' |
|---|---|
| मयूरः | व्याघ्रः |
| हस्ती | शशकी |
| शशकः | मानिनी |
| मत्सी | कच्छपः |
| कच्छपी | हस्तिनी |
| मानी | राजा |
| राज्ञी | मयूरी |
| व्याघ्री | मत्स्यः |

२. 'क' सारिण्याः उदाहरणानि विलोक्य मञ्जूषायाः सहयोगेन 'ख' सारिणीं पूरयत

**'क' सारिणी**

| शब्दः | प्रत्ययः | स्त्रीलिङ्गम् |
|---|---|---|
| श्रीमत् | ई | श्रीमती |
| बुद्धिमत् | ई | बुद्धिमती |
| गच्छत् | ई | गच्छन्ती |
| हसत् | ई | हसन्ती |
| तपस्विन् | ई | तपस्विनी |
| मानिन् | ई | मानिनी |
| कर्तृ | ई | कर्त्री |
| नर्तक | ई | नर्तकी |
| कुमार | ई | कुमारी |
| मृग | ई | मृगी |

‘ख’ सारिणी

| शब्दः | प्रत्ययः | स्त्रीलिङ्गम् |
|---|---|---|
| गतवत् | ई | ........ |
| पठितवत् | ई | ........ |
| ........ | ई | दण्डिनी |
| हर्तृ | ई | ........ |
| ........ | ई | विधात्री |
| सिंहः | ई | ........ |
| ........ | ई | हंसी |
| मार्जारः | ई | ........ |
| ........ | ई | गायन्ती |
| तिष्ठत् | ई | ........ |
| रुदत् | ई | ........ |
| ........ | ई | नश्यन्ती |
| कारयत् | ई | ........ |
| ........ | ई | भवती |
| ........ | ई | कुर्वती |

**पठितवती, दण्डिन्, हर्त्री, गतवती, विधातृ, हंसः, सिंही, मार्जारी, गायत्, रुदती, तिष्ठन्ती, नश्यत्, कारयन्ती, भवत्, कुर्वत्**

३. चित्राधारेण वर्णनं कुरुत



श्रवणपाठः

## वीरगाथा

सैनिकाः वीराः भवन्ति । सैनिकाः देशस्य रक्षार्थं प्रत्यहं जागरिताः भवन्ति । ते स्वदेशस्य कृते प्रियान् प्राणान् त्यक्तुम् अपि तत्पराः भवन्ति । ते स्वदेशस्य रक्षायै शत्रुभिः सह युद्धं कुर्वन्ति । यः युद्धात् पलायनं करोति, स कातरः भवति । देशरक्षकाः सैनिकाः युद्धक्षेत्रात् न पलायन्ते । वीरान् सैनिकान् दृष्ट्वा शत्रवः एव पलायनं कुर्वन्ति । स्वदेशे विदेशेषु च वीराणां कीर्तिः प्रसृता भवति । वीरस्य सम्मानं सर्वत्र भवति । शत्रवः अपि वीरं योद्धारं प्रसंशन्ति ।

सप्तमः पाठः

# स्वामी प्रपन्नाचार्यः

**मित्रैः सह विमर्शनं कुरुत**

एषः स्वामी प्रपन्नाचार्यः अस्ति । एतस्य पूर्वनाम 'काले राई' आसीत् । एषः जीवनस्य त्रिंशत्तमे वयसि अध्ययनारम्भम् अकरोत् ।



स्वामी प्रपन्नाचार्यः वेदान्तविषये 'विद्यावारिधिः' इति उपाधिं प्राप्तवान् । अतः सः 'डा. स्वामी प्रपन्नाचार्यः' इति कथ्यते । एषः अनेकानि प्राज्ञिककार्याणि अकरोत् ।




स्वामिनः प्रपन्नाचार्यस्य अनेकाः कृतयः प्रकाशिताः सन्ति । तासु 'काले राईका क्वाँटी कविता', 'अब हमें भूल नही करना चाहिए', 'वेदमा के छ ?', 'मिल्केका झिल्का', 'प्राचीन हिन्दुविज्ञान', 'वेदान्तनयभूषणम्', इत्याद्याः प्रसिद्धाः सन्ति ।

नेपाले प्राचीनकाले बहवः विद्वांसः चिन्तकाश्च अभवन् । तेषां विद्यावैभवेन नेपालिनः कृतकृत्याः सन्ति । याज्ञवल्क्य-जनकादयः नेपालस्य ज्ञानगौरवम् अवर्धयन् । आधुनिककालेऽपि बहवः विद्यावन्तः चिन्तकाश्च अजायन्त । डा. स्वामी प्रपन्नाचार्यः एतादृश एव ख्यातनामा विद्वान् आसीत् ।

# राजर्षिः जनकः

अस्मिन् परिवर्तनशीले संसारे अनेके मनुष्याः जायन्ते म्रियन्ते च । तेषु महापुरुषाः परोपकारेण, त्यागेन च जीवनं यापयन्ति । ते स्वकीयं जीवनं स्वबुद्धिबलाद् जगतः उपकाराय समर्पयन्ति । तेषां पावनैः विचारैः उदात्तैः चरितैः जनाः अपि प्रेरणां प्राप्नुवन्ति, कृतार्थाश्च भवन्ति । तेन समाजस्य परिवर्तनं भवति । दुराचाराः अपि सदाचारम् अङ्गीकुर्वन्ति । तेषाम् आदर्शमयं चरित्रं दृष्ट्वा जनाः कर्तव्यपरिपालने दत्तचित्ताः भवन्ति । जीवनं च सफलम् अनुभवन्ति । ते स्वकीर्त्या सर्वदा जीवन्ति । राजर्षिः जनकः ईदृशेषु महापुरुषेषु एकः अस्ति । सः मिथिलानगरस्य राजा सन् अपि ऋषितुल्यः आसीत् ।



जनक-राजपरम्परायां एकविंशः जनकः सीरध्वजः आसीत् । मिथिलाक्षेत्रस्य राजा जनकः एवं रीत्या अद्यापि परिचीयते । एषः यज्ञान् सम्पादयति स्म । यज्ञसम्पादनाय एकदा भूमेः समीकरणाय एषः स्वयं हलेन भूमिं कर्षयन् आसीत् । तस्मिन् एव अवसरे हलस्य सीतायाः एका कन्या प्रादुर्बभूव । सीरध्वजः तां पुत्रीरूपेण स्वीकृत्य तस्याः भरणम् अकरोत् । सा एव पश्चात् 'भगवती सीता' इति नाम्ना प्रसिद्धा अभवत् । तया सीतया सह अयोध्यानगरस्य

राजकुमारस्य श्रीरामस्य विवाहः अभवत् । एष प्रसङ्गः रामायणे प्रसिद्धः अस्ति ।

महर्षिणा याज्ञवल्क्येन साकं जनकस्य घनिष्ठः सम्बन्धः आसीत् । तत्र इयं कथा प्रसिद्धा अस्ति – विदेहराजो जनकः समये समये राजभवने विशालं ज्ञानसत्रम् आयोजयति स्म । ज्ञानसत्रे परब्रह्मणः सम्बन्धे गभीरं चिन्तनं भवति स्म । केषुचित् दार्शनिकविषयेषु विदुषां मध्ये परस्परं शास्त्रार्थः भवति स्म । तत्र बहवः विद्वांसः उपस्थिताः भवन्ति स्म । शास्त्रार्थे विजेता विद्वान् राजर्षेः जनकात् बहूनि धनानि प्राप्नोति स्म । तत्र याज्ञवल्क्यः, अश्वलः, आर्तभागः, भुज्युः, उषस्तः, कहोलः, आरुणिः, गार्गी च प्रमुखाः विद्वांसः विदुष्यश्च आसन् । तेषु याज्ञवल्क्यः उत्कृष्टः आसीत् । सः राजर्षेः जनकस्य गुरुः अपि आसीत् । तस्य पुरतः अन्ये सर्वे विद्वांसः पराजिताः भवन्ति स्म ।

याज्ञवल्क्यस्य शिष्यः राजर्षिः जनकः सुप्रसिद्धः दार्शनिकः आसीत् । एषः एव उत्कृष्टस्य विदेहसिद्धान्तस्य प्रतिष्ठापनस्य मूलम् अस्ति । तदनुसारेण आत्मतत्त्वम् अस्माकं शरीरात् पृथक् अस्ति । तदेव आत्मतत्त्वं अस्माकं मूलं स्वरूपम् अस्ति । तस्यैव अनुभवेन दुःखस्य आत्यन्तिकी निवृत्तिः भवति । एतेनैव विदेहदर्शनेन पश्चात् जनकः विदुषां समाजे राजर्षिः इति उपाधिना सम्मानितः वर्तते ।

राजर्षिः जनकः नित्यम् एव सत्सङ्गं करोति स्म । राज्ञा जनकेन गुरूपदेशस्य शास्त्रोपदेशस्य च जीवने पूर्णरूपेण परिपालनं कृतम् । एतत्सम्बद्धाः ज्ञानविषयकाः सन्दर्भाः विशेषतः बृहदारण्यकोपनिषदि अष्टावक्रगीतायां च प्राप्यन्ते । सत्सङ्गत्या विषयवैराग्येण च राजा जनकः अस्माकं देशस्य गौरवं वर्तते । तस्य नाम्ना मिथिलाक्षेत्रं विदेहनगरी, जनकपुरम् इति च नाम्ना प्रसिद्धिं गतम् । नेपालदेशस्य गौरवभूतोऽयं जनकः सम्प्रति नेपालस्य राष्ट्रियविभूतिषु परिगणितः अस्ति ।

यस संसारमा अनेकथरी मानिसहरू हुन्छन् । तीमध्ये केही व्यक्तिहरू आफ्ना चरित्र र कार्यका कारण महापुरुषका रूपमा परिचित बन्न पुग्छन् । त्यस्ता महापुरुषमध्ये राजर्षि जनक पनि एक हुन् । उनी धेरै यज्ञ गर्दथे । उनकी छोरी सीताको विवाह श्रीरामसँग भएको थियो । याज्ञवल्क्य आदि विद्वान्हरूसित बारम्बार सत्सङ्ग हुने गर्दथ्यो । राजा जनक गुरु र शास्त्रको उपदेश पूर्णरूपले पालन गर्दथे । राजा भए पनि उनी ऋषिजस्तै थिए । त्यसैले राजर्षि जनक नामले प्रख्यात भए । उनकै नामबाट मिथिलालाई विदेहनगरी र जनकपुर भनिएको हो । उनी सबैलाई त्यागी र ज्ञानी बन्नुपर्छ भनेर व्यावहारिक शिक्षा दिन्थे । सबैका आदर्श बनेकाले उनलाई नेपालका राष्ट्रिय विभूतिमा गणना गरिएको छ ।

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| विद्यावैभवम् | विद्याधनम् | विद्याधन | Wealth based on learning and wisdom |
| कृतकृत्यः | कृतार्थः | कृतज्ञ | Gratified |
| परिवर्तनशीलः | अस्थिरः | परिवर्तनशील | Changeable |
| स्वबुद्धिबलम् | स्वप्रज्ञासामर्थ्यम् | आफ्नै बुद्धिको शक्ति | Strenth of one's own wisdom |
| दुराचारः | कदाचारः | नराम्रो बानी | Wicked |
| अङ्गीकरोति | स्वीकरोति | स्वीकार गर्छ | Accepts |
| समीकरणम् | सन्तुलनम् | समरूप बनाउनु | Levelling |
| प्रादुर्बभूव | जातः | जन्मियो | Born |
| ज्ञानसत्रम् | प्रज्ञासङ्गोष्ठी | विज्ञ सभा | Scholars' convention |
| परब्रह्म | परमेश्वरः, परमात्मा | परमेश्वर | The Supreme God |
| शास्त्रार्थः | शास्त्रविवादः | शास्त्रको चर्चा | Discussion over the meaning of the sacred scriptures |
| दार्शनिकः | तत्त्वज्ञः | दर्शन जान्ने | Philosopher |
| प्रतिष्ठापनम् | प्रकर्षतया स्थापनम् | स्थापना गर्ने काम | Installation |
| आत्मतत्त्वम् | आत्मज्ञानम् | अध्यात्म ज्ञान | Eternal soul |
| आत्यन्तिकी निवृत्तिः | परमा मुक्तिः | अनन्त मुक्ति | Ultimate salvation |

| | | | |
|---|---|---|---|
| सत्सङ्गतिः | सत्सङ्गः | सत्सङ्ग | Good company |
| विषयवैराग्यम् | सुखभोगाद् विरक्तिः | सुख त्याग | Freedom from worldly passion or desires |
| राष्ट्रियविभूतिः | राष्ट्रगौरवर्धकः जनः | राष्ट्रिय विभूति | National figure or property |
| परिगणितः | निश्चितः | विशेष रूपले गनिएको | Counted |

## अभ्यासः

### श्रवणं भाषणं च

१. अधस्तनानि पदानि उच्चारयत

परिवर्तनशीले, मनुष्याः, महापुरुषाः, परोपकारेण, यापयन्ति, स्वकीयम्, स्वबुद्धिबलात्, समर्पयन्ति, उदात्तैः, प्रेरणाम्, प्राप्नुवन्ति, कृतार्थाः, दुराचाराः, अङ्गीकुर्वन्ति, आदर्शमयम्, दत्तचित्ताः, स्वकीर्त्या, सर्वदा, मिथिलानगरस्य, ऋषितुल्यः

२. शिक्षकात् अधस्तनानि पदानि श्रुत्वा अनुवाचयत

दार्शनिकः, उत्कृष्टस्य, आत्मतत्त्वम्, पृथक्, स्वरूपम्, अनुभवेन, आत्यन्तिकी, निवृत्तिः, विदेहदर्शनेन, पश्चात्, विदुषाम्, राजर्षिः, सम्मानितः, सन्दर्भाः, विशेषतः, बृहदारण्यकोपनिषदि, अष्टावक्रगीतायाम्, सत्सङ्गत्या, गौरवम्, मिथिलाक्षेत्रम्, विदेहनगरी, जनकपुरम्

३. पाठस्य द्वितीयस्य अनुच्छेदस्य द्रुतपठनं कुरुत ।

४. अधःस्थम् अनुच्छेदं पठित्वा प्रश्नान् उत्तरयत

अस्माकं नेपालः प्रकृत्या एव सुशोभितः वर्तते । अनेकैः मनोहरैः श्वेतैः हिमालयैः, हिमालयप्रदेशः शोभायमानः दृश्यते । आकर्षकैः निर्झरैः, विशालैः शिखरैः, वन्यैः च पर्वतीयप्रदेशः अलङ्कृतः विद्यते । घनैः वनैः, विशालया भूम्या, अनेकाभिः संस्कृतिपरम्पराभिः च तराईप्रदेशः समृद्धः विराजते । तराईक्षेत्रम् 'अन्नस्य भाण्डागारम्' कथ्यते । हिमालयेभ्यः निःसृताः बहवः नद्यः अस्याम् एव भूमौ प्रवहन्ति । देशस्य पूर्वभागे मेची, कोशी इति, मध्यभागे वाग्मती, नारायणी इति, पश्चिमभागे च भेरी,

राप्ती, कर्णाली इति नद्यः प्रवहन्ति । कोशी सर्वासु नदीसु विशाला अस्ति । नारायणी सर्वासु अतीव गभीरा विद्यते । कर्णाली च अतीव दीर्घा वर्तते ।

(क) हिमालयीयप्रदेशः कीदृशः वर्तते ?

(ख) तराईप्रदेशः कथं विराजते ?

(ग) अस्माकम् अन्नस्य भाण्डागारम् कुत्र अस्ति ?

(घ) का नदी सर्वासु गभीरा वर्तते ?

(ङ) कर्णाली नदी कस्यां दिशि प्रवहति ?

(च) पूर्वभागे काः नद्यः प्रवहन्ति ?

(छ) कैः पर्वतीयप्रदेशः अलङ्कृतः विद्यते ?

५. संवादमाध्यमेन स्वस्य ग्रामस्य/नगरस्य वर्णनं कुरुत ।

६. श्रवणपाठं श्रुत्वा प्रश्नान् उत्तरयत

किम् आवश्यकं तत्त्वं वर्तते ?

जलम् आवश्यकं तत्त्वं वर्तते ।

(क) केन विना जन्तवः न जीवन्ति ?

.........................................................................

(ख) किं जीवनं कथ्यते ?

.........................................................................

(ग) कस्य सदुपयोगः कर्तव्यः ?

.........................................................................

(घ) कस्य सङ्कटः वर्धमानः दृश्यते ?

.........................................................................

(ङ) अस्माकं देशः केन समृद्धः वर्तते ?

.........................................................................

पठनम्

१. अधस्तनं बोधानुच्छेदं पठित्वा प्रश्नान् उत्तरयत



माघमासस्य प्रथमः दिवसः मकरसङ्क्रान्तिः कथ्यते । मकरसङ्क्रान्तिः अस्माकं देशस्य विशेषं पर्व मन्यते । अस्मिन् दिने नेपालस्य विविधेषु स्थलेषु मेलापकं भवति । कन्काइधाम्नि, देवघट्टधाम्नि, गलेश्वरधाम्नि, रुरुक्षेत्रे, वराहक्षेत्रे च विशेषं मेलापकं भवति । अस्मिन् दिने तीर्थस्नानस्य च महत्त्वं वर्तते । जनाः अस्मिन् दिने तिलमोदकम्, कृशरान्नम्, कन्दमूलादिकं च खादन्ति । थारुसमुदायस्य माघीपर्व अपि अस्मिन् एव दिवसे मान्यते ।

माघ महिनाको प्रथम दिनलाई मकरसङ्क्रान्ति भनिन्छ । मकरसङ्क्रान्ति हाम्रो देशको विशेष पर्व मानिन्छ । यस दिनमा नेपालका विविध स्थलमा मेला लाग्छ । कन्काइधाम, देवघाटधाम, गलेश्वरधाम, रुरु क्षेत्र र वराहक्षेत्रमा विशेष मेला लाग्छ । यस दिनमा तीर्थस्नानको ठूलो महत्त्व छ । मानिसहरू यस दिन तिलको लड्डु, खिचडी, तरुल, शखरखण्ड आदि कन्दमूल खान्छन् । थारु समुदायको माघीपर्व पनि यसै दिन मनाइन्छ ।

**प्रश्नाः**

(क) माघमासस्य प्रथमः दिवसः किं कथ्यते ?

(ख) मकरसङ्क्रान्तिः अस्माकं देशस्य कीदृशं पर्व मन्यते ?

(ग) मकरसङ्क्रान्तौ कुत्र कुत्र मेलापकं भवति ?

(घ) जनाः मकरसङ्क्रान्तौ किं किं खादन्ति ?

(ङ) थारुसमुदायस्य किं पर्व मकरसङ्क्रान्तौ मान्यते ?

२. पाठस्य प्रथमम् अनुच्छेदं पठित्वा एकपदेन प्रश्नान् उत्तरयत

(क) संसारः कीदृशः अस्ति ?

(ख) के परोपकारेण, त्यागेन च जीवनं यापयन्ति ?

(ग) दुराचाराः किम् अङ्गीकुर्वन्ति ?

(घ) महापुरुषाः किं सफलम् अनुभवन्ति ?

(ङ) कः ऋषितुल्यः आसीत् ?

३. पाठस्य चतुर्थम् अनुच्छेदं पठित्वा पूर्णवाक्येन उत्तरयत

(क) याज्ञवल्क्यस्य शिष्यः कः आसीत् ?

(ख) कः राष्ट्रियविभूतिषु परिगणितः अस्ति ?

(ग) आत्मतत्त्वं अस्माकं कीदृशं स्वरूपम् अस्ति ?

(घ) कः राजर्षिः इति उपाधिना सम्मानितः वर्तते ?

(ङ) आत्मतत्त्वस्य अनुभवेन दुःखस्य कीदृशी निवृत्तिः भवति ?

**लेखनम्**

१. सत्यकथने [√] चिह्नम्, असत्यकथने च [×] चिह्नं दत्त

(क) जनकः बहून् यज्ञान् सम्पादितवान् ।

(ख) याज्ञवल्क्यः विदेहसिद्धान्तं प्रतिष्ठापितवान् ।

(ग) जनकः कर्मणि संलग्नः न आसीत् ।

(घ) याज्ञवल्क्यः जनकस्य गुरुः आसीत् ।

(ङ) सत्सङ्गेन सज्ज्ञानं न प्राप्यते ।

## २. एकवाक्येन उत्तरयत

(क) 'हलेन' अस्य विभक्तिः का ?

(ख) 'प्रसङ्गः रामायणे प्रसिद्धः' अत्र विशेषणं किम् ?

(ग) 'विजेता बहूनि धनानि प्राप्नोति स्म' अत्र कर्मपदं किम् ?

(घ) 'ज्ञानविषयकाः सन्दर्भाः' अत्र विशेष्यं किम् ?

## ३. पाठात् 'स्म' इति पदेन सहितानि क्रियापदानि अन्विष्य लिखत

**यथा - आयोजयति स्म**

## ४. उदाहरणानुसारेण एकवचनस्य बहुवचनस्य वा रूपाणि लिखत

| **एकवचनम्** | **बहुवचनम्** |
|---|---|
| लभते | लभन्ते |
| म्रियते | .......... |
| .......... | भवन्ति |
| .......... | नयन्ति |
| आसीत् | .......... |
| .......... | प्राप्नुवन्ति |
| आयोजयति | .......... |
| अभवत् | .......... |
| .......... | कुर्वन्ति |

५. शिक्षकस्य साहाय्येन अधस्तनानि पदानि स्त्रीलिङ्गे परिवर्तयत

विद्वान्, गायकः, कविः, सुन्दरः, प्रसिद्धः, उत्कृष्टः

६. विलोमपदानि परस्परं मेलयत

| 'अ' खण्डः | 'आ' खण्डः |
|---|---|
| म्रियन्ते | विलग्नः |
| सर्वदा | विजितः |
| विशालम् | निकृष्टः |
| बहु | जायन्ते |
| पराजितः | एकदा |
| उत्कृष्टः | विदेहः |
| शरीरधारी | लघु |
| संलग्नः | अल्पम् |

७. पाठाधारेण रिक्तस्थानं पूरयत

(क) राजर्षिः ........... नित्यम् एव ........... करोति स्म ।

(ख) ...... जनकेन गुरूपदेशस्य ........... च जीवने ........... परिपालनं कृतम् ।

(ग) नेपालदेशस्य ......... जनकः सम्प्रति ......... राष्ट्रियविभूतिषु ......... अस्ति ।

(घ) सत्सङ्गत्या ......... च राजा जनकः अस्माकं ......... गौरवं वर्तते ।

(ङ) तस्य नाम्ना ......... विदेहनगरी, ......... इति च नाम्ना ......... गतम् ।

८. मञ्जूषायाः पदानाम् आधारेण चित्रस्य वर्णनं कुरुत



| |
|---|
| तडागस्य, नार्यः, कदलीफलानि, रात्रौ, प्रातःकाले, सूर्योदयसमये, पारिवारिकसुखार्थम्, मिष्टान्नम्, जलाभ्यन्तरे, व्रतम्, कार्तिकशुक्लपक्षे, षष्ठ्याम् तिथौ, उत्सवम्, रमन्ते, सूर्यस्य, आचरन्ति, कुर्वन्ति, भवन्ति |

९. उदाहरणं विलोक्य निर्देशानुसारेण उत्तराणि लिखत

अहं प्रातः .................... उत्तिष्ठामि । (पञ्चवादनम्)

अहं प्रातः पञ्चवादने उत्तिष्ठामि ।

(क) अहं प्रतिदिनं .............करोमि । (स्नानम्)

(ख) अहं .............करोमि । (योगाभ्यासः)

(ग) अहं ............. करोमि । (भोजनम्)

(घ) अहं गृहे प्रतिदिनं .............करोमि । (गृहकार्यम्)

(ङ) अहं स्वस्य .............स्वयं प्रक्षालयामि । (वस्त्रम्)

(च) अहं ............. सह क्रीडामि । (मित्रम्)

(छ) अहं .............रक्षामि । (पर्यावरणम्)

## रचनात्मकः अभ्यासः

१. चित्राधारेण वर्णनं कुरुत



## श्रवणपाठः

# जलम्

वयं सर्वत्र जलं पश्यामः । जलम् आवश्यकं तत्त्वं वर्तते । पानाय, स्नानाय, प्रक्षालनाय सिञ्चनाय च जलम् अनिवार्यं भवति । जलेन विना जन्तवः न जीवन्ति । अन्नानि अपि न भवन्ति । वनस्पतयः विलीयन्ते । अन्नेन एव कारणेन जलं जीवनम् अपि कथ्यते । जलस्य संरक्षणं स्वच्छीकरणं च आवश्यकम् अस्ति । अस्य सदुपयोगः अपि कर्तव्यः भवति । विश्वस्य विभिन्नेषु राष्ट्रेषु जलस्य सङ्कटः वर्धमानः दृश्यते । अस्माकं देशः जलस्रोतसा समृद्धः वर्तते । जलस्रोतसः सदुपयोगेन वयं च सम्पन्नाः भवितुं शक्नुमः ।

## अष्टमः पाठः

# हलेसी

### मित्रैः सह पठत



(कैलासः राई हस्तस्थं चित्रं दर्शयन् पितामहीं पृच्छति)

कैलासः - पितामहि ! अस्मिन् चित्रे का गुहा अस्ति ?

पितामही - ध्यानेन पश्य ! इयं हलेसीगुहा अस्ति ।

कैलासः - भवती अत्र गता अस्ति किम् ?

पितामही - आम्, बहुवारम् । इयम् अत्यन्तं मनोहरा प्राकृतिकी गुहा अस्ति । अत्र प्रकृत्या निर्मिताः अनेकाः आकृतयः सन्ति । भ्रमणार्थम् अत्र अवश्यं गन्तव्यम् ।

कैलासः - इयं गुहा कुत्र अस्ति ?

पितामही - इयं गुहा खोटाङजनपदे दुग्धकौशिक्याः पूर्वभागे अस्ति । किराताः अपि पर्वोत्सवेषु ते हलेसीगुहां गत्वा महादेवं पूजयन्ति ।

कैलासः - किराताः अपि महादेवं पूजयन्ति ?

पितामही - आम् । किराताः किरातेश्वरं मत्वा महादेवं पूजयन्ति । इदं गुहास्थलं किरातानाम् आदिमा भूमिः मन्यते । बौद्धाः अपि इदं गुहास्थलं तीर्थं मन्यन्ते ।

कैलासः - बौद्धैः सह अपि अस्याः गुहायाः सम्बन्धः अस्ति ?

पितामही - अस्ति । बौद्धाः इमां गुहां 'मरातिक' इति नाम्ना व्यवहरन्ति । अष्टम्याः शताब्द्याः बौद्धगुरुः पद्मसम्भवः राजकुमारी मान्दारवा च अमितायुषः बुद्धात् अत्रैव आयुःसिद्धिं प्राप्नुताम् इति बौद्धाः कथयन्ति । पद्मसम्भवः एव इमां गुहाम् अन्विष्टवान् इति ते विश्वसन्ति ।

कैलासः - अहो ! अद्य अहं नवीनं रहस्यम् अजानाम् । आगामिनि अवकाशे भ्रमणार्थम् अहम् अवश्यं तत्र गमिष्यामि ।

पितामही - शोभनम् । नेपालाद् एव न, विदेशेभ्यः अपि इमां गुहां विलोकयितुं श्रद्धाम् अर्पयितुं च जनाः आगच्छन्ति । त्वया अपि अवश्यं गन्तव्यम् ।

कैलासः - पितामहि ! भवती अस्माकं देशस्य कस्यचिद् महिमयुतस्य स्थलस्य विषये कथयितुं शक्नोति ? अहं श्रोतुम् इच्छामि ।

पितामही - समीचीनम् । तर्हि अहं मानसखण्डस्य विषये कथयामि ।

कैलास राई र हजुरआमाबिच हलेसी गुफाका बारेमा कुराकानी हुन्छ । कैलासले सोधेका प्रश्नको उत्तर हजुरआमाले बताउने क्रममा गुफाको महत्त्व वर्णित छ । यसअनुसार खोटाङ जिल्लामा दुधकोशीको पूर्वपट्टि हलेसी गुफा रहेको छ । प्राकृतिक रूपमा निर्मित गुफामा विभिन्न कलात्मक आकृतिहरू कोरिएका छन् । किरातहरू यस स्थललाई आफ्नो आदिम भूमि मान्दछन् । उनीहरू त्यहाँ गई किरातेश्वर महादेवको पूजा आराधना गर्दछन् । गुफाको शोभा हेर्न तथा श्रद्धा अर्पण गर्न नेपालबाट मात्र नभई विदेशबाट पनि मानिसहरू आउने गर्दछन् । बौद्धहरू यसलाई नै 'मरातिक' गुफा भन्दछन् । आठौँ शताब्दीका आचार्य पद्मसम्भवले यो ठाउँ पत्ता लगाएको र पद्मसम्भवका साथै राजकुमारी मन्दारवाले अमितायु बुद्धबाट यहीँ आयुसिद्धि प्राप्त गरेको विश्वास गर्दछन् ।

# मानसखण्डः

नेपालः प्रकृत्या संस्कृत्या च सुन्दरः देशः अस्ति । ताप्लेजुङतः दार्चुलां यावत् अत्र अनेके हिमालयाः सन्ति । स्कन्दपुराणे हिमालयक्षेत्रं पञ्चसु खण्डेषु विभक्तम् अस्ति- हिमवत्खण्डः, मानसखण्डः, केदारखण्डः, जालन्धरखण्डः, काश्मीरखण्डः इति । नेपालस्य कर्णालीतः पश्चिमः भागः मानसखण्डः अस्ति । तिब्बतस्य भारतस्य च कश्चित् भूभागः अपि मानसखण्डे आयाति । स्कन्दपुराणे मानसखण्डस्य परिचयः यथा प्रदर्शितः अस्ति-

नन्दपर्वतमारभ्य यावत् काकगिरिः स्मृतः ।
तावद् वै मानसः खण्डः ख्यायते नृपसत्तम ॥

भारतस्य कुमाउँप्रदेशे नन्दपर्वतः अस्ति । नेपालस्य कर्णालीक्षेत्रे काकगिरिः वर्तते । तयोः द्वयोः पर्वतयोः मध्ये विद्यमानः भूभागः एव मानसखण्डः अस्ति ।




भगवतः शङ्करस्य वासस्थानरूपेण पुराणेषु वर्णितः कैलासपर्वतः तिब्बतस्य पश्चिमभागे वर्तते । कैलासस्य दक्षिणे भागे मानस-सरोवरः अस्ति । मानस-सरोवरः भगवतः शङ्करस्य

क्रीडास्थलं मन्यते । अयं सरोवरः ब्रह्मणा मनसा एव निर्मितः मन्यते । अत एव अस्य नाम मानससरोवरः इति जातम् । इमं मानससरोवरं परितः विद्यमानः भूभागः मानसखण्डः कथ्यते ।

ब्रह्मपुत्रः, सतलजः, सिन्धुः, कर्णाली, महाकाली, गङ्गा, यमुना, सरस्वती, सरयुः, अलकनन्दा, सेती, भेरी इत्याद्याः अनेकाः नद्यः मानस-सरोवराद् उद्भूताः सन्ति । तासां नदीनां तटेषु एव मानवानां सभ्यता विकसिता अभवत् । किंवदन्त्यनुसारेण पुरा ब्रह्मा मानवानां सृष्टिं कर्तुम् ऐच्छत्, ततः स मानस-सरोवरं परितः मानसखण्डम् अरचयत्, अनन्तरं सः तत्र मनोः शतरूपायाश्च सृष्टिम् अकरोत् । ताभ्यां दम्पतीभ्यां सर्वेषां मानवानां सृष्टिः अभवत् । अतः मानवानां सृष्टिमूलम् अपि मानसखण्डः मन्यते । अतः पौरस्त्यानां सभ्यतानां मूलं मानस-सरोवरः अस्ति ।

मानसखण्डे अधुना नेपालस्य कर्णाली-सुदूरपश्चिम-प्रदेशौ स्तः । काञ्जीरोवाहिमालयः, अपिहिमालयः, सैपालहिमालयः, छायानाथहिमालयः, मालिकाहिमालयः, व्यासहिमालयश्च अत्रैव सन्ति । कर्णाली, भेरी, सेती, महाकाली, वृद्धगङ्गा, तिला, मोहना इत्याद्याः नद्यः अस्मिन् क्षेत्रे प्रवहन्ति । रारा, फोक्सुण्डो, घोडाघोडी, वेदकोट इत्यादयः सरोवराः अस्य क्षेत्रस्य महिमानं वर्धयन्ति । रारा-सेफोक्सुण्डो-खप्तड-राष्ट्रियनिकुञ्जाः अपि अत्र सन्ति । अत्र अनेकविधानि औषधानि, बहुमूल्याः वनस्पतयश्च लभ्यन्ते । अनेके निर्झराः अस्य क्षेत्रस्य सौन्दर्यं वर्धयन्ति । अतः प्रकृत्या इदं क्षेत्रं मनोरमम् अस्ति ।



पुरा मानस-सरोवरं परितः यक्षाणां निवासः आसीत् । यक्षाः शिवगणाः आसन् । अधुना मानसखण्डस्य प्रमुखाः वास्तव्याः यक्षाणां सन्ततयः एव सन्ति । ते अधुना खसजातयः कथ्यन्ते । ब्राह्मणाः, क्षत्रियाः, ठकुरिणः, वादिनः, दलिताः च खसजातयः सन्ति । मानसखण्डे मगरजातीयाः, थारुजातीयाः, राउटेजातीयाः, राजीजातीयाः, गुरुङजातीयाः, व्यासीजातीयाः, कुमालजातीयाः अपि निवसन्ति । मानसखण्डस्य हिमालयक्षेत्रेषु भोटजातीयानाम् अपि निवासः विद्यते ।



मानसखण्डे चत्वारिंशत्सहस्र-सङ्ख्यकानि तीर्थस्थलानि सन्ति । अत्र भुवनेश्वरी, उग्रतारा, मालिका, त्रिपुरासुन्दरी इत्यादीनि अनेकानि शक्तिपीठानि सन्ति । वैद्यनाथः, चन्दननाथः, खार्पुनाथः इत्यादयः शिवालयाः सन्ति । रेन्छेलिङादीनि अनेकानि बौद्धमन्दिराणि च अत्र वर्तन्ते । खेचराद्रिः, वैद्यनाथः इत्यादीनि तीर्थस्थलानि च मानसखण्डस्य महत्त्वं सूचयन्ति । अतः धार्मिकदृष्ट्या अपि मानसखण्डः महत्त्वपूर्णः अस्ति ।

जुम्लामण्डलस्य सिञ्जाक्षेत्रं नेपालीभाषायाः उद्गमस्थलं मन्यते । सिञ्जाप्रदेशस्य ताम्रपत्रादिषु नेपालीभाषायाः प्राचीनं स्वरूपं लभ्यते । अधुना अपि मानसखण्डवासिनः प्रायेण नेपालीभाषायाः प्राचीनस्वरूपस्य एव प्रयोगं कुर्वन्ति । अतः भाषायाः इतिहासे अपि मानसखण्डः महत्त्वपूर्णः अस्ति ।

समग्रतः मानसखण्डः मनोरमः अस्ति । अस्य क्षेत्रस्य पौराणिकम्, धार्मिकम्, ऐतिहासिकम्, भौगोलिकम्, सांस्कृतिकं च बहु महत्त्वं वर्तते । अस्य क्षेत्रस्य प्रचारेण सह सर्वतोभावेन विकासः आवश्यकः अस्ति ।

हिमाली क्षेत्रलाई हिमवत्खण्ड, मानसखण्ड, केदारखण्ड, जालन्धरखण्ड र काश्मीरखण्ड गरी पाँच भागमा बाँडेर हेर्ने गरिन्छ। मानसखण्ड चाहिँ भारतको कुमाउँमा रहेको नन्दपर्वत र नेपालको कर्णालीमा रहेको काकगिरिको बिचको भूभाग मानिन्छ । भगवान् शिवको वासस्थान कैलास र क्रीडास्थल मानसरोवर वरिपरिको क्षेत्रलाई मानसखण्ड भनिएको हो । सभ्यताको विकासमा ब्रहमपुत्र, कर्णाली आदि नदीको उद्गमस्थल मानसरोवरको योगदान देखिन्छ । ब्रहमाले मानवसृष्टिको चाहनाले मानसखण्डको सृष्टि गरेको मानेर यसलाई सृष्टिको मूल मान्ने गरिन्छ ।

मानसखण्डमा अहिले नेपालका कर्णाली र सुदूरपश्चिम प्रदेश पर्दछन् । यसअन्तर्गत नेपालका काञ्जीरोवा, अपि आदि हिमाल र कर्णाली, भेरी, सेती आदि नदी पर्दछन् । यसका साथै रारा, से-फोक्सुन्डो एवम् खप्तड राष्ट्रिय निकुञ्ज र रातालगायतका तालहरू पनि पर्दछन् । बहुमूल्य वनस्पति, सुन्दर झरना आदिले मानसखण्ड सुन्दर प्रकृतिको उदाहरण बनेको छ । पहिला मानसरोवरको वरिपरि शिवका गण यक्षहरू बस्ने गर्थे । अहिले तिनकै सन्तति बाहुन, क्षेत्री, ठकुरी, वादी, दलित आदि खस जाति र यीबाहेक मगर, थारु, राउटे, राजी, गुरुङ, कुमाल आदिको बसोबास रहेको छ ।

मानसखण्डमा चालिस हजारको सङ्ख्यामा तीर्थस्थलहरू छन् । यहाँ भुवनेश्वरी, उग्रतारा आदि शक्तिपीठ, वैद्यनाथ, चन्दननाथ आदि शिवालय, रेन्छेलिङ आदि बौद्धमन्दिर र खप्तड, वैद्यनाथ आदि तीर्थस्थल छन् । समग्रमा हेर्दा यस खण्डका पौराणिक, धार्मिक, ऐतिहासिक, भौगोलिक तथा सांस्कृतिक महत्त्व रहेको देखिन्छ । यस क्षेत्रको प्रचारका साथै चौतर्फी विकास आवश्यक छ ।

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| गुहा | गहवरम् | गुफा | Cave |
| आकृतिः | आकारः | आकार | Shape |
| गन्तव्यम् | गमनीयम् | जानुपर्छ | Should go |
| जनपदम् | मण्डलम् | जिल्ला | District |
| विलोकयितुम् | द्रष्टुम् | हेर्न | To see |

| | | | |
|---|---|---|---|
| अन्विष्टवान् | अनुसंहितवान् | खोजे | Searched |
| नवीनम् | नूतनम् | नयाँ | New |
| रहस्यम् | गुह्यम् | रहस्य | Mystery |
| श्रोतुम् | आकर्णयितुम् | सुन्न | To listen |
| निर्झरः | निर्झरिणी | झरना | Waterfall |
| आयाति | आगच्छति | आउँछ | Is coming |
| गिरिः | पर्वतः | पहाड | The Mountain |
| तटः | तीरम् | किनार | Edge |
| पुरा | प्राचीनकाले | उहिले | In The Past |
| महिमा | महत्त्वम् | महत्त्व | Importance |
| परितः | समन्तात् | वरिपरि | Arround |
| अधुना | इदानीम् | अहिले | Now |
| विद्यते | वर्तते | छ | Is |

## अभ्यासः

### श्रवणं भाषणं च

१. स्वयम् उच्चार्य सामूहिकरूपेण उच्चारयितुं सखीन् निर्दिशत

यक्षाणाम्, खेचराद्रिः, ब्रह्मणा, वृद्धगङ्गा, प्रत्यागच्छन्ति, प्रचारेण

२. शिक्षकमुखात् श्रुत्वा सामूहिकरूपेण अनूच्चारयत

पौरस्त्यानाम्, तीर्थस्थलानि, सर्वतोभावेन, निर्झराः, उग्रतारा, ताम्रपत्रादिषु

३. पाठस्य प्रथमम् अनुच्छेदं श्रुत्वा अधस्तनानां प्रश्नानाम् उत्तराणि वदत

(क) हिमालयक्षेत्रं कतिषु खण्डेषु विभक्तम् अस्ति ?

(ख) नेपालस्य कः भागः मानसखण्डः अस्ति ?

(ग) नन्दपर्वतः कुत्र वर्तते ?

४. अधस्तनं श्लोकं सलयम् उच्चारयत

नन्दपर्वतमारभ्य यावत् काकगिरिः स्मृतः ।
तावद् वै मानसः खण्डः ख्यायते नृपसत्तम ॥

५. पाठस्य सप्तमम् अनुच्छेदं सख्युर्मुखात् श्रुत्वा निम्नपदानां सान्दर्भिकम् अर्थं श्रावयत

(क) उद्गमस्थलम् (ख) प्राचीनस्वरूपम् (ग) ताम्रपत्रम्

६. पाठं श्रुत्वा अधस्तनानां प्रश्नानाम् उत्तराणि कथयत

(क) कैलासपर्वतः कुत्र अस्ति ?

(ख) सर्वप्रथमं ब्रह्मा कयोः मानवयोः सृष्टिम् अकरोत् ?

(ग) मानसखण्डे वर्तमानाः राष्ट्रियनिकुञ्जाः के ?

(घ) समग्रतः मानसखण्डः कीदृशः अस्ति ?

७. अधस्तनं गद्यांशं शिक्षकात् श्रुत्वा मातृभाषया नेपालस्य महत्त्वं वर्णयत



ताप्लेजुङतः दार्चुलां यावत् नेपाले अनेके हिमालयाः सन्ति । पुनः हिमालयात् तराईप्रदेशं यावत् अत्र अनेकानि मन्दिराणि, चैत्यानि, प्रासादाः, तीर्थक्षेत्राणि च सन्ति । बुद्धस्य,

सीतायाः, जनकस्य, पार्वत्याः, भृकुट्याः च जन्मना अयं देशः पवित्रितः अस्ति । अनेकेषां धर्माणाम्, अनेकासां जातीनाम्, अनेकेषां स्थानानां च बहुविधया संस्कृत्या विलसितः अयं देशः तपःस्थली अस्ति । विश्वामित्र-व्यास-वाल्मीक्यादयः अनेके ऋषयः अत्रैव तपस्यां कृत्वा सिद्धिं प्रापुः । 'देवाः अपि स्वर्गं परित्यज्य अत्रैव वस्तुम् इच्छन्ति' इति पुराणेषु वर्णितम् अस्ति । अतः पौराणिककालात् एव नेपालस्य बहु महत्त्वं वर्तते ।

ताप्लेजुङबाट दार्चुलासम्म नेपालमा थुप्रै हिमालयहरू छन् । हिमालयबाट तराईसम्म यहाँ अनेक मन्दिर, चैत्य, दरबार र तीर्थस्थलहरू छन् । बुद्ध, सीता, जनक, पार्वती र भृकुटीको जन्मले यो देश पवित्र भएको छ । अनेक धर्म, जाति र स्थानहरूको विभिन्न संस्कृतिद्वारा युक्त भएको यो देश तपस्या गर्ने स्थान हो । विश्वामित्र, व्यास, वाल्मीकि आदि ऋषिहरूले यहीँ तपस्या गरी सिद्धि प्राप्त गरे । 'देवताहरू पनि स्वर्ग छाडेर यहीँ बस्न चाहन्छन्' भनी पुराणहरूमा वर्णन गरिएको छ । त्यसैले पौराणिक कालदेखि नै नेपालको धेरै महत्त्व छ ।

८. अधस्तनानि पदानि शृणुत, ततः 'द्वयोः समूहयोः क्रियापदेषु का भिन्नता अस्ति ?' कथयत

| 'क' समूहः | 'ख' समूहः |
|---|---|
| भवति, प्रवहति, सूचयति, गच्छति | वर्तते, मन्यते, विद्यते, कथ्यते |

९. श्रवणपाठं श्रुत्वा प्रश्नान् उत्तरयत

(क) गण्डकी कीदृशी नदी अस्ति ?

(ख) गण्डकी कस्मिन् देशे वहति ?

(ग) का हिमालयात् वहति ?

(घ) कुत्र शालग्रामः भवति ?

(ङ) कस्याः तीरे बहूनि तीर्थानि सन्ति ?

## पठनम्

१. कोष्ठस्थं संवादं साभिनयं पठत ।

२. पाठस्य चतुर्थस्य अनुच्छेदस्य द्रुतपठनं कुरुत ।

३. अधस्तनम् अनुच्छेदं सम्यक् पठित्वा कैलासमानसरोवरयात्रायाः पौराणिकक्रमनिर्धारणं कुरुत



कैलास-मानस-सरोवर-क्षेत्रं हिन्दूनां बौद्धानां च आस्थायाः केन्द्रम् अस्ति । स्कन्दपुराणानुसारेण कैलास-मानस-सरोवर-यात्रायाः प्रमुखः मार्गः मानसखण्डस्य नेपालभागे एव आस्ति । तदनुसारेण कैलासं गन्तुकामाः यात्रिणः सर्वप्रथमं महाकाल्यां स्नानं कुर्वन्ति । ततः महाकाल्याः तटस्थानां तीर्थानां दर्शनं कुर्वन्ति । अनन्तरं दारुपर्वतम् उल्लङ्घ्य मानस-सरोवरं गच्छन्ति । तत्र स्नानं कृत्वा ते कैलासं प्राप्नुवन्ति । कैलासस्य परिक्रमणं कृत्वा पुनः ते मानस-सरोवरे स्नानं कुर्वन्ति । ततः कर्णाल्याः तटे स्थितानां तीर्थानां दर्शनं कुर्वन्तः ते प्रत्यागच्छन्ति । ज्वालातीर्थस्य दर्शनं कृत्वा ते पुनः महाकाली प्राप्नुवन्ति । ततः ते ब्रह्मकुण्डे स्नानं कुर्वन्ति । एवं तेषां कैलास-मानस-सरोवर-यात्रा पूर्णा भवति । मानसखण्डस्य चत्वारिंशत्सहस्र-सङ्ख्यकानां तीर्थानां परिक्रमा च भवति ।

कैलाश एवम् मानसरोवरको क्षेत्र हिन्दु र बौद्धहरूको आस्थाको केन्द्र हो । स्कन्दपुराणका अनुसार कैलास मानसरोवरको यात्राको प्रमुख मार्ग मानसखण्डको नेपाली भूभागमा नै छ । त्यसअनुसार कैलास जान चाहने यात्रीहरू सर्वप्रथम महाकालीमा स्नान गर्दछन् । महाकालीका तटमा रहेका तीर्थहरूको दर्शन गर्दै अघि बढ्दछन् । त्यसपछि दार्चुला नाघेर मानसरोवर पुग्दछन् र त्यहाँ स्नान गरी कैलास पुग्दछन् । कैलासको परिक्रमा गरी फेरि उनीहरू मानसरोवर पुग्दछन् र फेरि त्यहाँ स्नान गर्दछन् । त्यसपछि कर्णालीको तीरमा रहेका तीर्थहरूको दर्शन गर्दै उनीहरू फर्किन्छन् । ज्वालातीर्थको दर्शन गरी फेरि महाकाली पुगेर उनीहरू ब्रहमकुण्डमा स्नान गर्दछन् । यसरी उनीहरूको कैलास मानसरोवर यात्रा पूर्ण हुन्छ । मानसखण्डभित्र रहेका ४०००० तीर्थहरूको परिक्रमा पनि हुन्छ ।

४. पाठस्य तृतीयम् अनुच्छेदं पठित्वा अधःस्थानां प्रश्नानाम् उत्तराणि दत्त

(क) मानस-सरोवराद् उद्भूतानां कासाञ्चित् तिसृणां नदीनां नामानि कानि ?

(ख) कुत्र मानवानां सभ्यतायाः विकासः अभवत् ?

(ग) ब्रहमा कुत्र मानसखण्डम् अरचयत् ?

(घ) काभ्यां सर्वेषां मानवानां सृष्टिः अभवत् ?

५. स्कन्दपुराणस्य मानसखण्डे नेपालस्य मानसखण्डस्थानि स्थानानि पौराणिकैः नामभिः वर्णितानि सन्ति । तेषु कानिचन नामानि इदानीन्तनैः नामभिः सह प्रदत्तानि सन्ति । तेषां बोधपूर्वकं पठनं कुरुत

**दार्वचलः/दारुगिरिः** - दार्चुला

**चर्मण्वती** - चमेलिया

**श्यामा/काली/वैयासकी** - महाकाली नदी

**सीता** - सेती नदी

**खेचराद्रिः** - खप्तड क्षेत्र

**लिपिपर्वतः** - लिपुलेक

**वायुतटः** - बैतडी

**देवतटः** - डोटी

**दिल्पेश्वरः** - दिपायल

**आश्रमः** - अछाम

**वज्राङ्कः** - बभ्काङ
**वृद्धगङ्गा** - बुढी गङ्गा
**कूर्मपर्वतः** - डडेलधुरा
**मुद्गलम्** - मुगु
**युगला** - जुम्ला
**दोहावली** - डोल्पा
**वाजु** - बाजुरा
**शीतलोदका** - चिसापानी
**काञ्चननगरम्** - कञ्चनपुर
**हुम्/ओम्** - हुम्ला
**कालिका** - कालीकोट
**गोदावरी** - कैलाली

६. प्रदत्तम् अनुच्छेदं पठित्वा अधस्तनान् प्रश्नान् उत्तरयत



मानसखण्डः संस्कृत्या उन्नतः वर्तते । अत्र प्रचलितानि पर्वाणि उत्सवाः च अस्य क्षेत्रस्य मौलिकीं संस्कृतिं परिचाययन्ति । खसजातीयानां संस्कृतिः अत्र विशेषस्थानं लभते । अत्र हिन्दूनाम्, बौद्धानाम्, बोनधर्मावलम्बिनां च निवासः अस्ति । अत्रत्याः हिन्दवः मष्टोपूजनं कुर्वन्ति । मष्टोपूजा खसजातीयानाम् एव संस्कृतिः अस्ति । मष्टो खसजातीयानां कुलदेवः मन्यते । एषः शिवस्य एव स्वरूपम् अस्ति । खसजातीयाः नागराजस्य वासुकेः अपि पूजां कुर्वन्ति । एते ग्रामदेवम्, वनदेवम्, मार्गदेवं च पूजयन्ति । अत्र अन्यासां जातीनां च विविधा संस्कृतिः अस्ति । अत्रत्या सर्वा अपि संस्कृतिः सहिष्णुतां सद्भावं च शिक्षयति । अत्रत्याः जनाः सर्वेषां संस्कृतिं सम्मानयन्ति ।

मानसखण्ड संस्कृतिका आधारमा उच्च छ । यहाँ चलेका चाडबाड र मेलापर्वहरूले यस क्षेत्रका मौलिक संस्कृतिहरूको परिचय दिन्छन् । खस जातीयहरूको संस्कृतिले यहाँ विशेष स्थान ओगटेको छ । यहाँ हिन्दु, बौद्ध र बोन धर्म मान्नेहरूको बसोबास छ । यहाँका हिन्दुहरू मस्टोको पूजा गर्दछन् । मस्टोको पूजा गर्नु खसहरूको मात्र संस्कृति हो । मस्टो खसहरूका कुलदेवता मानिन्छन् । यी शिवकै स्वरूप हुन् । खसहरू नागराज वासुकि, ग्रामदेव, वनदेव र मार्गदेवको पनि पूजा गर्दछन् । यहाँ अरू जातिहरूको पनि संस्कृतिको विविधता छ । यहाँको सबै प्रकारको संस्कृतिले सहिष्णुता र सद्भावको शिक्षा दिन्छ । यहाँका मानिसहरू सबैको संस्कृतिलाई सम्मान गर्दछन् ।

(क) के मानसखण्डस्य मौलिकीं संस्कृतिं परिचाययन्ति ?

(ख) मानसखण्डे केषां निवासः अस्ति ?

(ग) कः खसजातीयानां कुलदेवः मन्यते ?

(घ) मानसखण्डस्य संस्कृतिः किं शिक्षयति ?

(ङ) 'वर्तते' 'लभते' अनयोः क्रियापदयोः प्रयोगेण मौलिकं वाक्यद्वयं रचयत ।

७. पाठं सम्यक् पठित्वा अधोऽङ्कितान् प्रश्नान् उत्तरयत

(क) भगवतः शङ्करस्य वासस्थानं कस्मिन् पर्वते अस्ति ?

(ख) मानस-सरोवरः कुत्र अस्ति ?

(ग) कः भूभागः मानसखण्डः कथ्यते ?

(घ) मानसखण्डे कति तीर्थस्थलानि सन्ति ?

(ङ) यक्षाणां निवासः कुत्र आसीत् ?

८. अधस्तनम् अनुच्छेदं बोधपूर्वकं पठित्वा स्वभाषया गौरापर्वणः महत्त्वं प्रतिपादयत

प्राचीनकाले मानसखण्डः मातृसत्तात्मकः आसीत् इति गौरापर्व सूचयति । गौरी स्वतन्त्ररूपेण शिवं वरम् अवृणोत् । तस्याः एव नारीस्वतन्त्रतायाः स्मरणे अद्यापि मानसखण्ड-वासिनः गौरापर्व मानयन्ति । गौरापर्व मानसखण्डस्य सामाजिकं सद्भावं च सूचयति । परिवारस्य शान्त्यै समृद्ध्यै एकतायै प्रसन्नतायै च नारीणां सहभागिता अत्यावश्यकी अस्ति इति



गौरापर्व निर्दिशति ।

प्राचीन कालमा मानसखण्ड मातृसत्तात्मक अर्थात् नारीप्रधान थियो भन्ने कुरालाई गौरापर्वले सङ्केत गर्दछ । गौरीले आफूखुसी शिवलाई वरका रूपमा वरण गरिन् । त्यही नारीस्वतन्त्रताको सम्झनामा आज पनि मानसखण्डका बासिन्दाहरू गौरापर्व मनाउँछन् । गौरापर्वले मानसखण्डको सामाजिक सद्भावलाई सूचित गर्दछ । परिवारको शान्ति, समृद्धि र एकताका लागि नारीहरूको सहभागिता अत्यावश्यक हुन्छ भन्ने कुरालाई गौरापर्वले निर्देश गरेको छ ।

## लेखनम्

१. अधो वर्तमानानि पदानि अभ्यासपुस्तिकायां पुनर्लिखत

सन्ततयः, मानसखण्ड-वासिनः, दम्पतीभ्याम्, प्रकृत्या, धार्मिकदृष्ट्या

२. पाठस्य चतुर्थानुच्छेदस्य श्रुतलेखनं कुरुत ।

३. मञ्जूषायां विद्यमानैः उपयुक्तैः पदैः रिक्तस्थानं प्रपूर्य अनुच्छेदं पूरयत

| | | | |
|---|---|---|---|
| मानसखण्डे | आसन् | दलिताः | अधुना |
| पुरा | हिमालयक्षेत्रेषु | वास्तव्याः | अपि |

------- मानस-सरोवरं परितः यक्षाणां निवासः आसीत् । यक्षाः शिवगणाः ------- । अधुना मानसखण्डस्य प्रमुखाः ------- यक्षाणां सन्ततयः एव सन्ति । ते ------- खसजातयः कथ्यन्ते । ब्राह्मणाः, क्षत्रियाः, ठकुरिणः, वादिनः, ------- च खसजातयः सन्ति । ------- मगरजातीयाः, थारुजातीयाः, राउटेजातीयाः, राजीजातीयाः, गुरुङजातीयाः, व्यासीजातीयाः, कुमालजातीयाः --------- निवसन्ति । मानसखण्डस्य --------- भोटजातीयानाम् अपि निवासः विद्यते ।

## ४. अनुच्छेदं पठित्वा प्रश्नान् उत्तरयत



डोटीजनपदे वर्तमानम् खप्तडक्षेत्रं मानसखण्डस्य प्रसिद्धं क्षेत्रम् अस्ति । धार्मिकदृष्ट्या प्राकृतिकदृष्ट्या च इदं क्षेत्रं महत्त्वपूर्णम् अस्ति । स्कन्दपुराणे खेचराद्रिः इति नाम्ना खप्तडक्षेत्रं वर्णितम् अस्ति । द्वापरयुगे पाण्डवाः खेचराद्रेः मार्गेण एव स्वर्गं गताः आसन् इति किंवदन्ती श्रूयते । खप्तडस्वामी अत्रैव तपस्याम् अकरोत् । खप्तडस्वामी पञ्चाशद् वर्षाणि खप्तडक्षेत्रे व्यतीतवान् । सः तत्रैव स्थित्वा धर्मविज्ञानम्, विचारविज्ञानम्, स्वास्थ्यविज्ञानम्, आरोग्यविज्ञानम्, वेदान्तविज्ञानम् इत्यादीन् ग्रन्थान् अरचयत् । अद्यापि खप्तडस्वामिनः आश्रमः तत्र अस्ति । खप्तड-राष्ट्रिय-निकुञ्जः, खप्तडस्वामिनः आश्रमः, त्रिवेणी, सहस्रलिङ्गम्,

खप्तड-सरोवरम्, नागशिला, मातृस्थानम्, केदारशिला च अस्य क्षेत्रस्य दर्शनीयस्थलानि सन्ति । श्रद्धालवः गङ्गादशहरा-पर्वणि खप्तडसरोवरे स्नानं कुर्वन्ति । गङ्गादशहरायां खप्तडसरोवरे स्नानकरणेन मोक्षः प्राप्यते इति जनविश्वासः अस्ति । ग्रीष्मे वर्षायां च खप्तडक्षेत्रे विविधवर्णानि भूमिपुष्पाणि विकसन्ति । शरद्-हेमन्त-शिशिरेषु खप्तडक्षेत्रं हिमेन आच्छादितं भवति । वसन्तसमये तत्र सप्तविधानि रोहितकानि विकसन्ति । अतः एकस्मिन् वर्षे एव खप्तडक्षेत्रस्य त्रिविधं रूपं दृश्यते । त्रिविधम् एव रूपं मनोहारि भवति । अतः इदं क्षेत्रं भूस्वर्गः मन्यते । अस्मिन् क्षेत्रे धार्मिकाः पर्यटकाः अपि आगच्छन्ति । प्रकृतेः सौन्दर्यं द्रष्टुकामाः पर्यटकाः अपि आगच्छन्ति । पर्यटकानाम् आगमनेन देशस्य प्रचारः अपि भवति, अर्थार्जनं च भवति । अतः अस्य क्षेत्रस्य विशेषेण प्रचारः कर्तव्यः ।

डोटी जिल्लामा रहेको खप्तडक्षेत्र मानसखण्डको प्रसिद्ध क्षेत्र हो । धार्मिक र प्राकृतिक दृष्टिले यो क्षेत्र अत्यन्त महत्त्वपूर्ण छ । स्कन्दपुराणमा खेचराद्रि नामले यस क्षेत्रको वर्णन गरिएको छ । द्वापरयुगमा पाण्डवहरू यही मार्गद्वारा नै स्वर्ग गएका थिए भन्ने जनविश्वास छ । खप्तडस्वामीले यहीँ तपस्या गर्नुभएको थियो । खप्तडस्वामीले यस क्षेत्रमा ५० वर्ष बिताउनुभएको थियो । उहाँले यहीँ बसेर धर्मविज्ञान, विचारविज्ञान, स्वास्थ्यविज्ञान, आरोग्यविज्ञान, वेदान्तविज्ञानजस्ता पुस्तकहरूको रचना गर्नुभयो । आज पनि त्यहाँ खप्तडस्वामीको आश्रम छ । खप्तड राष्ट्रिय निकुञ्ज, खप्तडस्वामीको आश्रम, त्रिवेणी, सहस्रलिङ्ग, खप्तड दह, नागशिला, माइस्थान, केदारशिला आदि यस क्षेत्रका दर्शनीय स्थलहरू हुन् । श्रद्धालुहरू गङ्गादशहरा पर्वमा खप्तड दहमा स्नान गर्दछन् । गङ्गादशहरामा खप्तड दहमा स्नान गर्नाले मोक्ष प्राप्त हुन्छ भन्ने विश्वास श्रद्धालुहरूको छ । ग्रीष्म र वर्षा ऋतुमा यस क्षेत्रमा विभिन्न रङका भुइँफूलहरू फुल्छन् । शरद्, हेमन्त र शिशिर ऋतुमा यो क्षेत्र हिउँले ढाकिन्छ । वसन्त ऋतुमा यहाँ सात प्रकारका गुराँसहरू फुल्दछन् । यसरी एकै वर्षमा खप्तडक्षेत्रको तीन प्रकारको आकर्षक रूप देखिन्छ । त्यसैले यस क्षेत्रलाई भूस्वर्ग मानिन्छ । यस क्षेत्रमा धार्मिक पर्यटकहरूका साथै प्रकृतिको सौन्दर्य हेर्न चाहने पर्यटकहरू पनि आउँछन् । पर्यटकहरूको आगमनले देशको सौन्दर्यको प्रचार पनि हुन्छ र अर्थोपार्जन पनि हुन्छ । त्यसैले यस क्षेत्रको विशेष प्रचार गर्नुपर्छ ।

(अ) **एकवाक्येन उत्तरयत**

(क) पौराणिककाले खप्तडक्षेत्रस्य नाम किम् आसीत् ?

(ख) श्रद्धालवः कस्मिन् पर्वणि खप्तडसरोवरे स्नानं कुर्वन्ति ?

(ग) खप्तडस्वामी खप्तडक्षेत्रे कति वर्षाणि व्यतीतवान् ?

(आ) **सङ्क्षेपेण उत्तरयत**

(क) खप्तडक्षेत्रं किमर्थं भूस्वर्गः मन्यते ?

(ख) किमर्थं खप्तडक्षेत्रस्य प्रचारः आवश्यकः अस्ति ?

(इ) अस्मिन् अनुच्छेदे प्रयुक्तानि भूतकालस्य पञ्च क्रियापदानि लिखत ।

५. **अधस्तनान् प्रश्नान् एकवाक्येन उत्तरयत**

(क) कैलासस्य कस्मिन् दिग्भागे मानससरोवरः अस्ति ?

(ख) अधुना नेपालस्य कौ प्रदेशौ मानसखण्डे स्तः ?

(ग) नेपालीभाषायाः उद्गमस्थलं कुत्र अस्ति ?

६. **पाठाधृतानाम् अधस्तनानां प्रश्नानां सङ्क्षेपेण उत्तरं लिखत**

(क) मानसखण्डः प्रकृत्या मनोरमः अस्ति । कथम् ?

(ख) मानसखण्डे कासां जातीनां निवासः अस्ति ?

(ग) धार्मिकदृष्ट्या मानसखण्डः किमर्थं महत्त्वपूर्णः अस्ति ?

७. **स्वस्य निकटवर्तिनः कस्यचित् धार्मिकक्षेत्रस्य स्वभाषया सङ्क्षेपेण वर्णनं कुरुत ।**

८. **स्वस्य विषये अधःस्थानां प्रश्नानाम् उत्तराणि दत्त**

(क) तव गृहं कस्मिन् प्रदेशे अस्ति ?

(ख) तव प्रदेशे स्थिताः प्रमुखाः नद्यः काः ?

(ग) तव प्रदेशे विशेषेण कासां जातीनां जनाः निवसन्ति ?

(घ) तव प्रदेशस्य प्रमुखाणि धार्मिकस्थलानि कानि ?

(ङ) तव समुदायस्य विशिष्टं पर्व किम् ? सङ्क्षेपेण वर्णयत ।

९. अधस्तनानि पदानि प्रयुज्य वाक्यानि रचयत

अद्य, अनन्तरम्, वर्तते, एव, अरचयत्, कुर्वन्ति ।

१०. उदाहरणानि दृष्ट्वा सारिण्याः रिक्तस्थानं पूरयत

| सामान्यार्थे | प्रेरणार्थे | | सामान्यार्थे | प्रेरणार्थे |
|---|---|---|---|---|
| पठति | पाठयति | | जीवति | जीवयति |
| हसति | ......... | | क्रीडति | ........... |
| ........ | पातयति | | तुष्यति | तोषयति |
| खादति | ......... | | शुष्यति | ......... |
| हरति | हारयति | | **ददाति** | **दापयति** |
| स्मरति | ....... | | **दधाति** | ......... |
| ......... | तारयति | | **वर्धते** | **वर्धयति** |
| करोति | ......... | | **वर्तते** | .......... |

११. परस्परं मेलयत

| | |
|---|---|
| शृणोति | वादयति |
| त्यजति | मारयति |
| गच्छति | क्रोशयति |
| धावति | ज्वालयति |
| तिष्ठति | श्रावयति |
| जायते | पातयति |
| म्रियते | त्याजयति |
| वदति | भ्रामयति |
| ज्वलति | जनयति |
| क्रोशति | गमयति |
| पतति | स्थापयति |
| भ्रमति | धावयति |

१२. उदाहरणानुसारेण अधस्तनानां प्रेरणार्थकक्रियापदानां भूतकालिकक्रियापदानि दर्शयत

| | | | |
|---|---|---|---|
| नाशयति | अनाशयत् | दर्शयति | अदर्शयत् |
| सेधयति | ----------------- | नादयति | ----------------- |
| लेखयति | ----------------- | स्फोटयति | ----------------- |
| नर्तयति | ----------------- | वाचयति | ----------------- |
| चालयति | ----------------- | रक्षयति | ----------------- |

## रचनात्मकः अभ्यासः

१. उदाहरणं विलोक्य रिक्तस्थानं पूरयत

| | | | |
|---|---|---|---|
| गच्छति | नरः गच्छन् अस्ति । | नारी गच्छन्ती अस्ति । | यानं गच्छत् अस्ति । |
| भ्रमति | बालकः ------- अस्ति । | बालिका ------- अस्ति । | चक्रं ------- अस्ति । |
| ------- | छात्रः पठन् अस्ति । | छात्रा ........ अस्ति । | मित्रं ------- अस्ति । |
| ------- | पिता ------- अस्ति । | माता चलन्ती अस्ति । | द्विचक्रकं ----- अस्ति । |
| ------- | व्याघ्रः ------- अस्ति । | व्याघ्री ------- अस्ति । | गगनं गर्जत् अस्ति । |

२. सारिणीं पूरयत

| क्रियापदम् | नैरन्तर्यबोधकम् (पुंलिङ्गे) | नैरन्तर्यबोधकम् (स्त्रीलिङ्गे) | नैरन्तर्यबोधकम् (नपुंसकलिङ्गे) |
|---|---|---|---|
| भवति | | | |
| वसति | | | |
| हसति | | | |
| तिष्ठति | | | |
| जीवति | | | |

| | | | |
|---|---|---|---|
| धावति | | | |
| क्रीडति | | | |
| क्रोशति | | | |
| पिबति | | | |
| पश्यति | | | |
| गायति | | | |
| जयति | | | |
| स्मरति | | | |
| त्यजति | | | |
| खादति | | | |
| दहति | | | |
| आह्वयति | | | |
| वदति | | | |
| नमति | | | |
| रक्षति | | | |
| प्रक्षालयति | | | |

३. रेखाङ्कितस्य पदस्य लिङ्गं परिचित्य रिक्तस्थाने उपयुक्तं नैरन्तर्यबोधकं पदं लिखत

(क) अग्रजा ओदनं ------- अस्ति । (पचति)

(ख) गुरुः अस्मान् ------- अस्ति । (पाठयति)

(ग) वृक्षात् पत्रं ------- अस्ति । (पतत्)

(घ) अजा चत्वरे ------- अस्ति । (चरति)

(ङ) वृषः क्षेत्रं ------- अस्ति । (कर्षति)

(च) पितामहः _______ अस्ति । (प्रसीदति)

(छ) धनम् _______ अस्ति । (नश्यति)

(ज) उद्यानं दर्शकानां मनः _______ अस्ति । (हरति)

(झ) पार्वती भक्तान् _______ अस्ति । (रक्षति)

(ञ) नन्दकला पितामही _______ अस्ति । (पृच्छति)

४. चित्राधारेण वर्णनं कुरुत



**श्रवणपाठः**

## गण्डकी

गण्डकी पवित्रा नदी अस्ति । गण्डकी मुक्तिक्षेत्रात् प्रवहति । इयं नेपालस्य प्रमुखा नदी वर्तते । एषा हिमालयात् वहति । नदी पर्वतेषु वहति । नदी गुहासु वहति । गण्डक्याः जलं शीतम् भवति । गण्डकीजले शालग्रामः भवति । शालग्रामः साक्षात् भगवान् विष्णुः अस्ति । गण्डक्याम् मत्स्याः क्रीडन्ति । गण्डक्याः तीरे बहूनि तीर्थानि सन्ति । गण्डकी नदी स्वच्छा अस्ति । गण्डकीजले जनाः स्नानं कुर्वन्ति ।

## नवमः पाठः

# योगः

मित्रैः सह पठत



अनेके विकाराः मानव-सम्बद्धाः भवन्ति । मानवः विकाराणाम् अपाकरणेन एव संस्कृतः भवितुं शक्नोति । यदा शरीरे विकाराः जायन्ते, तदा सः रुग्णः भवति । रोगस्य निराकरणार्थं तस्य चिकित्सा आवश्यकी भवति । तदर्थम् एव महर्षिभिः वैद्यक-शास्त्रं प्रणीतम् । तत्र चरक-संहिता, सुश्रुत-संहिता, चन्द्र-निघण्टुः इत्यादयः ग्रन्थाः प्रमुखाः सन्ति ।

समाजे सम्यग् व्यवहाराय, लोकप्रियताम् अर्जितुं च मधुरा परिष्कृता वाणी अपेक्षिता भवति । साधुवचनेन, मधुरवचनेन च सर्वे जनाः आकृष्टाः भवन्ति । एवं सम्यग् वाग्व्यवहारार्थं भाषाप्रयोग-पाटवम् आवश्यकं भवति । पदशास्त्रं तत् शिक्षयति ।

यदा तु मनसि विकारः भवति, तदा किमपि शोभनं न प्रचलति । मनोविकारेण सर्वाणि कार्याणि विकृतानि भवन्ति । अतः मनोविकारस्य अपाकरणाय योगसाधना अपेक्षिता भवति । एतदर्थम् अस्माकं वाङ्मये योगशास्त्रस्य अध्ययनाभ्यास-परम्परा प्रचलिता वर्तते । योगशास्त्रस्य विशेषतः ध्यानासन-प्राणायाम-साधनानाम् आधुनिके संसारे प्रसिद्धिः वर्तते ।

मानिसमा अनेक प्रकारका विकार हुन्छन् । हाम्रो प्राचीन परम्परामा तीन प्रकारका विकारको चर्चा पाइन्छ- १. शारीरिक विकार, २. वाणीको विकार ३. मनको विकार । शरीरमा विकार उत्पन्न हुँदा रोग उत्पन्न हुन्छ । त्यसलाई हटाउन चिकित्साशास्त्रको आवश्यकता पर्दछ । गलत, अपरिष्कृत शब्दहरूको प्रयोगले वाणीलाई विकारयुक्त बनाउँछ । पदशास्त्र (व्याकरण) को ज्ञानबाट यसलाई हटाउन सकिन्छ । मनको विकार सबैभन्दा हानिकारक विकार हो । योगसाधनाद्वारा मनको विकार हटाउन सकिन्छ । अहिले संसारमा आसन, प्राणायाम र ध्यानको साधना निकै प्रसिद्ध छ ।

# आचारपद्यानि



आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च ।

तस्मादस्मिन् सदा युक्तो नित्यं स्यादात्मवान् जनः ॥

श्रुति र स्मृति आदि ग्रन्थमा सबैभन्दा श्रेष्ठ धर्मको रूपमा सदाचारलाई व्याख्या गरिएको छ । अतः सदाचारमा रहने व्यक्ति आत्मज्ञानी बन्दछ । उसले नै मोक्ष पद प्राप्त गर्दछ ।

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।

चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम् ॥

जो मान्यजनलाई नमस्कार गर्दछ र सधैँ वृद्धवृद्धाको सेवामा संलग्न हुन्छ, ऊ लामो समयसम्म बाँच्दछ । ऊ ज्ञानी बन्दछ । उसको नाम चारैतिर फैलिन्छ । उसले शारीरिक बलसमेत प्राप्त गर्दछ ।

वृत्तं यत्नेन संरक्षेद् वित्तमेति च याति च ।

अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥

मानिसले धेरै दुःख गरेर धन आर्जन गर्दछ । धनको आर्जन र खर्चको क्रम चलिरहन्छ तर चरित्रमा यस्तो क्रम रहँदैन । एकपटक चरित्रले पतित भएपछि व्यक्तिले पुनः त्यसलाई कमाउन सक्दैन । त्यसैले धन होइन, चरित्र जोगाउन प्रयास गर्नुपर्दछ । धन नभएको व्यक्तिले प्रयास गरेर धन पाएजस्तो चरित्रहीन व्यक्तिले चरित्रलाई फेरि प्राप्त गर्न सक्दैन । वास्तवमा चरित्रहीन व्यक्ति मरेसमान हुन्छ । त्यसैले धनको बेवास्ता गरेर भए पनि चरित्र जोगाउनुपर्दछ । त्यसले मानिसको सर्वस्व चरित्र नै हो ।

### प्रथमं पद्यम्

**पदच्छेदः** - आचारः, परमः, धर्मः, श्रुत्युक्तः, स्मार्तः, एव, च, तस्माद्, अस्मिन्, सदा, युक्तः, नित्यम्, स्यात्, आत्मवान्, जनः ।

**अन्वयः** - आचारः एव श्रुत्युक्तः स्मार्तः च परमः धर्मः (अस्ति), तस्माद् अस्मिन् सदा युक्तः जनः नित्यम् आत्मवान् स्यात् ।

**सरलार्थः** - वेदादिषु श्रुतिग्रन्थेषु मनुस्मृत्यादिषु स्मृतिग्रन्थेषु च श्रेष्ठधर्मरूपेण आचारः व्याख्यायितः वर्तते । अतः यः जनः सर्वदा आचारे तिष्ठति, सः एव आत्मज्ञानी भवति । सः एव च मोक्षं प्राप्नोति ।

### द्वितीयं पद्यम्

**पदच्छेदः** - अभिवादनशीलस्य, नित्यम्, वृद्धोपसेविनः, चत्वारि, तस्य, वर्धन्ते, आयुः, विद्या, यशः, बलम् ।

**अन्वयः** - अभिवादनशीलस्य, नित्यम्, वृद्धोपसेविनः, तस्य आयुः, विद्या, यशः, बलम् (च) चत्वारि (तत्त्वानि) वर्धन्ते ।

**सरलार्थः** - यः मान्यजनान् नमस्करोति, सर्वदा वृद्धजनानां सेवायां निरतः भवति, तस्य आयुः वर्धते, असौ विद्यां लभते, यत्र तत्र तस्य कीर्तिः प्रसरति, सः मान्यजनानाम् आशीर्वादेन शारीरिकं बलं च लभते ।

### तृतीयं पद्यम्

**पदच्छेदः** - वृत्तम्, यत्नेन, संरक्षेत्, वित्तम्, एति, च, याति, च, अक्षीणः, वित्ततः, क्षीणः, वृत्ततः, तु, हतः, हतः ।

**अन्वयः** - वृत्तम्, यत्नेन, संरक्षेत्, वित्तम्, एति, च, याति, च, वित्ततः, क्षीणः, अक्षीणः, वृत्ततः, (क्षीणः) तु, हतः, हतः ।

**सरलार्थः** - मानवः धनं यत्नपूर्वकं रक्षति । धनं तु आगच्छति गच्छति च परन्तु एकवारं गतं चरित्रं पुनः न आगच्छति । अतः नहि धनम्, अपितु चरित्रं यत्नतः रक्षणीयम् । धनहीनः मनुष्यः प्रयत्नेन धनं पुनः अर्जितुं शक्नोति । सः धनम् इव चरित्रं पुनः अर्जितुं न शक्नोति । हतचरित्रः जनः मृतः इव भवति । अतः धनं परित्यज्य अपि चरित्रं सर्वथा रक्षणीयम् । मानवानां सर्वस्वं चरित्रम् एव अस्ति ।

## शब्दार्थाः

| | | | |
|---|---|---|---|
| आचारः | सद्व्यवहारः | राम्रो व्यवहार | Good behaviour |
| श्रुत्युक्तः | वेदोपदिष्ट | वेदले बताएको | Described by the Vedas |
| स्मार्तः | स्मृत्युपदिष्ट | स्मृतिले बताएको | Based on Smriti |
| सदा | नित्यम् | सधैँ | Always |
| नित्यम् | सदा | सधैँ, प्रतिदिन | Always |
| जनः | मानवः | मानिस | Human being |
| अभिवादनम् | प्रागनम् | नमस्कार, प्रणाम | Salutation, greetings |
| आयुः | जीवनकालः | आयु | Spam of life |
| विद्या | ज्ञानम् | विद्या | Knowledge |
| यशः | कीर्तिः | प्रसिद्धि, प्रतिष्ठा | Reputation, celebrity |
| बलम् | शक्तिः | तागत | Power, energy |
| वृत्तम् | चरित्रम् | आचारः, चरित्र | Character |
| यत्नेन | उद्यमेन | प्रयासले | By the attempt |
| वित्तम् | धनम् | धनसम्पत्ति | Money, wealth |
| हतः | मृतः, समाप्तः | मर्‍यो, सकियो | Killed, destroyed, dead |
| मानवः | नरः | मानिस | Human being |
| विकारः | विकृति | खराबी | Destortion |
| संस्कृतः | परिष्कृतः | निखारिएको | Refined |
| चिकित्सा | रोगनिवारणम् | उपचार | Curing, treatment |
| शोभनम् | रम्यम् | राम्रो | Good, well |
| अपाकरणम् | निवारणम् | हटाउनु | Removing |
| आधुनिकः | साम्प्रतिकः | हालको | Modern |
| संसारः | जगत् | विश्व | World |
| प्रसिद्धः | प्रख्यातिः | प्रख्यात | Famous |

## अभ्यासः

### श्रवणं भाषणं च

१. कक्षायां पाठस्य श्रवणानन्तरं स्वमातृभाषायां तस्य भावार्थं श्रावयत ।

२. मित्रात् पाठस्य द्वितीयं पद्यम्, तस्य भावार्थं च श्रुत्वा प्रश्नान् उत्तरयत

(क) सदाचारी जनः कान् नमस्करोति ?

(ख) सः केषां सेवायां तत्परः भवति ?

(ग) कस्य आयुः, विद्या, कीर्तिः, बलं च वर्धन्ते ?

(घ) अभिवादनशीलः जनः मान्यजनानाम् आशीर्वादेन किं लभते ?

३. पाठस्य प्रथमं पद्यं श्रुत्वा तस्य पदच्छेदं कुरुत ।

४. शिक्षकात् अधस्तनानि पदानि श्रुत्वा अनुवाचयत

आचारः, श्रुत्युक्तः, स्मार्तः, सदा, नित्यम्, जनः, अभिवादनम्, वृद्धोपसेविनः, वर्धन्ते, आयुः, विद्या, यशः, बलम्, वृत्तम्, संरक्षेत्, वित्तम्, अक्षीणः

५. पाठस्य पद्यानां लयोच्चारणपूर्वकं सामूहिकवाचनं कुरुत ।

६. पाठस्य एकैकं पद्यं क्रमेण एकाकी उच्चारयत ।

७. पाठस्य पदानि प्रयुज्य निर्मितानि नवीनानि वाक्यानि श्रावयत

(क) अहं वृत्तं यत्नेन रक्षामि ।

(ख) सर्वे शास्त्रनिर्दिष्टम् आचारं पालयन्तु ।

(ग) मम भ्राता अभिवादनशीलः अस्ति ।

(घ) तस्य पार्श्वे चत्वारि पुस्तकानि सन्ति ।

(ङ) वृद्धोपसेविनः आशीर्वादं प्राप्नुवन्ति ।

८. पाठस्य तृतीयस्य पद्यस्य अन्वयं श्रावयत ।

९. शिक्षकात् मनुस्मृतेः विषये श्रुत्वा परस्परं विमृशत ।

## १०. श्रवणपाठं श्रुत्वा प्रश्नान् उत्तरयत

### १. एकपदेन प्रश्नान् उत्तरयत

(क) जनः कुत्र निवसति स्म ?

(ख) जनः कुत्र गतः नासीत् ?

(ग) वृद्धः किम् रोपयन् आसीत् ?

(घ) जनः वृद्धस्य प्रत्युत्तरेण कीदृशः अभवत् ?

### २. पूर्णवाक्येन प्रश्नान् उत्तरयत

(क) एकदा जनः कुत्र प्रस्थितवान् ?

(ख) वृद्धः कथं जनं प्रत्युत्तरति ?

(ग) ग्रामीणाः जनाः कीदृशाः भवन्ति ?

(घ) कस्य मनसि ग्रामदर्शनस्य इच्छा आसीत् ?

### ३. सत्यकथने (√) चिह्नम् असत्यकथने च (×) चिह्नं दत्त

(क) एकस्मिन् वने एकः जनः निवसति स्म । ( )

(ख) जनस्य ग्रामदर्शनस्य इच्छा न्यूना आसीत् । ( )

(ग) वृक्षः कदापि न फलिष्यति । ( )

(घ) ग्रामीणाः जनाः परिश्रमिणः भवन्ति । ( )

## पठनम्

## १. बोधपाठं पठत

जगच्चक्रस्य प्रवृत्तेः मूलं कारणं कर्म एव अस्ति । याज्ञिकाः यज्ञकर्म कुर्वन्ति । तेन आकाशे पर्जन्यः जायते । पर्जन्यात् वृष्टिः भवति । वृष्टेः कारणेन अन्नस्य उत्पादनं भवति । प्राणिनः अन्नं भक्षयन्ति । भक्षितम् अन्नं रजोवीर्य-रूपेण परिणमते । रजोवीर्याभ्यां प्रजाः जायन्ते । अतः भगवद्गीता उद्घोषयति–

**अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।**
**यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥**

यज्ञधूमेन यज्ञस्थलं परितः प्रसृतानां रोग-जीवाणूनां च विनाशः भवति । एतेन वायुमण्डलस्य शुद्धीकरणं भवति । अतः यज्ञस्थलं परितः निवसन्तः जनाः स्वस्थाः भवन्ति ।

भारतस्य भोपालक्षेत्रे Methyl Isocyanate (MIC) नामकस्य विषाक्तवाष्पस्य क्षरणस्य घटनायाः एकः सन्दर्भः च यज्ञकर्मणा पर्यावरणरक्षायाः तथ्यं प्रमाणीकरोति । २०४१ तमस्य वैक्रमाब्दस्य मार्गशीर्षमासस्य अष्टादशे दिनाङ्के अपराह्णे जातायाः वाष्पदुर्घटनायाः अनुसन्धानेन यज्ञकर्मणः महत्त्वं प्रकाशितम् अस्ति ।

पञ्चविंशतिशत-परिमितानां जनानां सप्तसहस्र-परिमितानां पशूनां च विनाशिकायां तस्यां वाष्पदुर्घटनायां प्रभावित-क्षेत्रस्य एव एकस्मिन् गृहे विषाक्तवाष्पस्य न किञ्चित् प्रभावः आसीत् । तत्र अनुसन्धानेन एतत् तथ्यम् आविष्कृतं यत्, तस्मिन् गृहे नित्यं क्रियमाणस्य हवनकर्मणः कारणेन तत्रत्याः जनाः पूर्णतया वाष्पप्रभाव-शून्याः स्वस्थाः च आसन् इति । एतेन तथ्येन वैज्ञानिकः संसारः च आश्चर्यम् उपगतः । ततः पाश्चात्त्याः जनाः अपि यज्ञकर्मणि संलग्नाः, अनुसन्धानरताः च अजायन्त ।

जगत्को सञ्चालनको मूल कारण कर्म हो । मानिस यज्ञकर्म गर्छन् । यज्ञको धुवाँबाट वायुमण्डल शुद्ध हुन्छ । धुवाँबाट बादल बन्छ । बादल बर्सिन्छ । वर्षाका कारण अन्नबाली राम्रो हुन्छ । प्राणीहरू अन्न खान्छन् । प्राणीले सन्तान जन्माउँछन् ।

यज्ञको धुवाँले रोगका जीवाणुहरू मर्छन् । त्यसबाट वायुमण्डल सफा हुन्छ । त्यसैले यज्ञस्थल वरिपरि निवास गर्नेहरू स्वस्थ हुन्छन् । भारतको भोपालमा Methyl Isocyanate (MIC) नामको विषालु ग्याँस लिक भएको घटनामा यज्ञको सन्दर्भ जोडिएको छ । वि.सं. २०४१ मङ्सिर १८ गते दिउँसो भोपालमा भएको ग्यास दुर्घटनाको अनुसन्धान गर्दा त्यही क्षेत्रको एक घरमा त्यो विषालु ग्यासको कत्ति पनि प्रभाव परेको पाइएन । कारण, त्यस घरमा सधैँ हवन कर्म हुन्थ्यो । यस कुराले वैज्ञानिकको समाजसमेत आश्चर्यमा परेको थियो । आजकल पश्चिमाहरूसमेत यज्ञ कर्मको आचरण र अनुसन्धानमा लागेका देखिन्छन् ।

## २. बोधकथायाः आधारेण प्रश्नान् उत्तरयत

(क) जगच्चक्रस्य प्रवृत्तेः मूलं कारणं किम् ?

(ख) के अन्नं भक्षयन्ति ?

(ग) के यज्ञकर्म कुर्वन्ति ?

(घ) काभ्यां प्रजाः जायन्ते ?

(ङ) कस्मात् वृष्टिः भवति ?

(च) यज्ञकर्मणा कुत्र पर्जन्यः जायते ?

(छ) वृष्टेः कारणेन कस्य उत्पादनं भवति ?

(ज) कीदृशम् अन्नं रजोवीर्य-रूपेण परिणमते ?

(झ) यज्ञस्थलं परितः निवसन्तः जनाः कीदृशाः भवन्ति ?

(ञ) यज्ञधूमेन कुत्र प्रसृतानां रोगजीवाणूनां विनाशः भवति ?

३. बोधपाठस्य मौनपठनं कृत्वा सोदाहरणं पाठसन्देशं कथयत ।

४. बोधपाठस्य अन्तिमस्य अनुच्छेदस्य द्रुतपठनं कृत्वा मित्राणि श्रावयत ।

५. बोधपाठस्य आधारेण विलुप्तानि पदानि वदत

भारतस्य ------------ Methyl Isocyanate (MIC) नामकस्य ------------ क्षरणस्य घटनायाः एकः सन्दर्भः च यज्ञकर्मणा ----------- तथ्यं प्रमाणीकरोति । २०४१ तमस्य वैक्रमाब्दस्य ---------- अष्टादशे ------------ अपराह्णे जातायाः ---------- अनुसन्धानेन ------------ महत्त्वं ------------ अस्ति ।

---------परिमितानां जनानां ----------परिमितानां ----------च विनाशिकायां तस्यां वाष्पदुर्घटनायां प्रभावितक्षेत्रस्य एव एकस्मिन् ---------- विषाक्तवाष्पस्य न किञ्चित् ---------- आसीत् । तत्र ---------- एतत्तथ्यम् आविष्कृतं यत्, ---------- गृहे नित्यं क्रियमाणस्य ............ कारणेन तत्रत्याः ............ पूर्णतया वाष्पप्रभाव-शून्याः ---------- च आसन् इति । एतेन तथ्येन --------- संसारः च --------- उपगतः । ततः पाश्चात्त्याः ---------- अपि यज्ञकर्मणि संलग्नाः, ---------- च अजायन्त ।

६. घटनाक्रमेण बोधपाठं विमृशत ।

## लेखनम्

१. **अधस्तनस्य पद्यस्य आधारेण प्रश्ननाम् उत्तराणि पूरयत**

वृत्तं यत्नेन संरक्षेद् वित्तमेति च याति च ।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥

(क) कः संरक्षेत् ?

----------- संरक्षेत् । (मानवः, पशुः, पक्षी)

(ख) कथं संरक्षेत् ?

----------- संरक्षेत् । (धनेन, मनसा, यत्नेन)

(ग) किं संरक्षेत् ?

----------- संरक्षेत् । (वस्त्रम्, वृत्तम्, द्रव्यम्)

(घ) किम् एति याति च ?

----------- एति याति च । (वृत्तम्, वित्तम्, पित्तम्)

(ङ) कस्मात् क्षीणः मानवः अक्षीणः भवति ?

----------- क्षीणः मानवः अक्षीणः भवति । (वृत्ततः, वित्ततः, गहतः)

(च) कस्मात् क्षीणः मानवः हतः हतः ?

----------- क्षीणः मानवः हतः हतः । (वित्ततः, बन्धुतः, वृत्ततः)

२. **पाठाधारेण पूर्णवाक्येन प्रश्नान् उत्तरयत**

(क) चरित्रं कथं रक्षणीयम् ?

(ख) मानवः धनं कथं रक्षति ?

(ग) किम् आगच्छति गच्छति च ?

(घ) कीदृशः जनः मृतः इव भवति ?

(ङ) एकवारं गतं किं पुनः न आगच्छति ?

(च) आचारवतः जनस्य कीर्तिः कुत्र प्रसरति ?

(छ) किं परित्यज्य अपि चरित्रं सर्वथा रक्षणीयम् ?

(ज) सर्वदा आचारे स्थितः जनः कीदृशः भवति ?

(झ) कुत्र श्रेष्ठधर्मरूपेण आचारः व्याख्यायितः वर्तते ?

(ञ) मनुष्यः किम् इव चरित्रं पुनः अर्जितुं न शक्नोति ?

(ट) मानवानां सर्वस्वं किम् ?

३. पाठस्य पद्यानां श्रुतलेखनं कुरुत ।

४. पाठात् अन्विष्य पर्यायपदानि लिखत

(क) गच्छति – याति

(ख) आगच्छति – ...........

(ग) मृतः – ...........

(घ) धनम् – ...........

(ङ) चरित्रम् – ...........

(च) हीनः – ...........

५. पाठाद् विचित्य कथायाः अष्टौ सारांशवाक्यानि लिखत ।

६. पाठाधारेण रिक्तस्थानं पूरयत

............................ नित्यं वृद्धोपसेविनः ।

चत्वारि ...... वर्धन्ते .......... यशो ....... ॥

वृत्तं ......... संरक्षेद् वित्तमेति ... याति ... ।

.......... वित्ततः क्षीणो ........... हतो ...... ॥

## रचनात्मकः अभ्यासः

१. उदाहरणानुसारेण रूपावल्याः सारिणीं रचयत

| रक्ष्-धातुः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः पुरुषः | रक्षेत् | रक्षेताम् | रक्षेयुः |
| मध्यमः पुरुषः | रक्षेः | रक्षेतम् | रक्षेत |
| उत्तमः पुरुषः | रक्षेयम् | रक्षेव | रक्षेम |

धातवः – भू (भवेत्) गम् (गच्छेत्)
चल् (चलेत्) स्था (तिष्ठेत्)
शिक्ष् (शिक्षयेत्) भक्ष् (भक्षयेत्)

२. ल्यप्-प्रत्ययान्तपदैः रिक्तस्थानं सम्पूर्य वाक्यानि लिखत

(क) साधकः विकारान् ..... स्वस्थः भवति । (अपाकृत्य, स्वीकृत्य, सङ्कृत्य)

(ख) पतञ्जलिः योगसूत्रं ..... लोकहितम् अकरोत् । (विनाश्य, अधीत्य, निर्माय)

(ग) ते प्राणायामं ..... सन्ध्याम् उपासते । (निधाय, विधाय, परिधाय)

(घ) सुश्रुतमुनिः सुश्रुतसंहितां ..... अस्मभ्यम् अयच्छत् । (विलिख्य, आनीय, आकृष्य)

(ङ) मनुष्यः धनं ..... अपि चरित्रं रक्षेत् । (विलोक्य, अपहृत्य, परित्यज्य)

३. प्रदत्तानां पदानां साहाय्येन पञ्चवाक्यैः चित्रं वर्णयत



एकं नगरम्, उन्नतानि भवनानि, विस्तृतः मार्गः, अस्ति, जनसम्मर्दः, विविधानि यानानि, ध्वनिप्रदूषणम्, सन्ति, आकाशम्, स्वच्छम्, उद्योगात् निःसृतः धूमः, अस्तव्यस्तं पर्यावरणम्, नास्ति

श्रवणपाठः

## लोकोपकार-परम्परा

एकस्मिन् नगरे एकः जनः निवसति स्म । सः पुस्तकेषु पत्रिकासु च ग्रामीणानां जनानां विषये बहु पठति स्म । ग्रामीणाः जनाः सरलाः, सद्भावयुताः, परिश्रमिणः च भवन्ति इति सः, जानाति स्म परन्तु सः कदापि ग्रामं गतः नासीत् । तस्य मनसि ग्रामदर्शनस्य प्रबला इच्छा अजायत । एकदा सः ग्रामं प्रति प्रस्थितवान् । सः वसयानाद् अवरुह्य मार्गे गच्छन् आसीत् । मार्गे एकः वृद्धः आम्रवृक्षम् रोपयन् आसीत् । तत् पश्यन् नागरिकः अवदत्, "भवान् किमर्थं वृथा परिश्रमं करोति ? यतः यदा एषः वृक्षः फलितः भविष्यति तदा भवान् जीवितः न भविष्यति, अलम् एतेन श्रमेण ।"

वृद्धः हसन् प्रत्युदतरत्, "भवान् एतान् फलयुक्तान् वृक्षान् पश्यतु । एतेषाम् रोपणम् अहं न अकरवम् परं एतेषां फलानि अहं भुञ्जानः अस्मि । सम्प्रति मया रोपितस्य वृक्षस्य फलानि अन्ये खादिष्यन्ति । एवम्प्रकारेण लोकोपकार-परम्परा प्रचलति । अत्र किम् आश्चर्यम् ?" वृद्धस्य प्रत्युत्तरं श्रुत्वा जनः लोकोपकारस्य महत्त्वम् अजानात् ।

## दशमः पाठः

# पर्व

चित्राणि दृष्ट्वा सखिभिः सह विमर्शं कुरुत






नृत्यम्, वेषभूषा, पर्व, मनोरञ्जनम्, मिलापः, गमनम्, वार्तालापः, मिष्टान्न-भोजनम्, नवीन-वस्त्राणि, द्विचक्रिका-यानम्

# संस्कृतिः

उपवने बहूनि पुष्पाणि भवन्ति । प्रत्येकं पुष्पस्य भिन्नम् रूपम्, भिन्नः सुगन्धः च भवति । अस्माकं देशे अपि विविधाः जातयः सन्ति । तासां जातीनाम् अपि भिन्ना संस्कृतिः, भिन्ना परम्परा च वर्तते । एतादृशी विविधता नेपालस्य विशेषता अस्ति । वातावरणानुसारेण मानवानाम् आहारः, विहारः, परिधानं च भिन्नं भवति । हिमालयक्षेत्रे, पर्वतीयक्षेत्रे, तराईक्षेत्रे च भिन्ना संस्कृतिः वर्तते ।

नेपालदेशस्य पश्चिमे भूभागे पर्वतीयक्षेत्रे मगरजातीयानां जनानां निवासः अस्ति । यद्यपि देशस्य सर्वेषु क्षेत्रेषु एते निवसन्ति तथापि विशेषतः गण्डकी-प्रदेशस्य, लुम्बिनी-प्रदेशस्य, कर्णाली-प्रदेशस्य च पर्वतीयक्षेत्रे एते बाहुल्येन निवसन्ति । मगरजातीयाः हिन्दुधर्मं बौद्धधर्मं च मानयन्ति । अतः हिन्दुधर्मानुसारेण, बौद्धधर्मानुसारेण च एतेषां संस्काराः भवन्ति । जन्मनः आरभ्य षष्ठिकापूजनम्, नामकरणम्, अन्नप्राशनम्, विवाहः इत्यादयः संस्काराः एतेषां प्रसिद्धाः सन्ति । एतेषां समाजे अन्नप्राशनसंस्कारः 'पूरभदै' इति नाम्ना प्रसिद्धः अस्ति । पञ्चमे वर्षे पुत्रस्य क्षौरम्, पुत्र्याश्च वस्त्रप्रदानम् इति संस्कारः विशेषतः विधीयते । परम्परानुसारेण एते मातुलकन्यया सह विवाहं कुर्वन्ति स्म, किन्तु अधुना तद् अनिवार्यं नास्ति । बौद्धधर्मावलम्बिनः जनाः बौद्धपरम्परानुसारेण एव संस्कारान् कुर्वन्ति ।

मगरजातीयाः पुरुषाः कञ्चुकम्, धौतवस्त्रम्, कटिबन्धनम्, गञ्जावस्त्रं च धारयन्ति । महिलाः च चोलिकाम्, शाटिकावस्त्राञ्चलम्, कटिबन्धनम् च धारयन्ति । नार्यः काचगुटिकाम्, प्रबालमालाम्, नासिकाभूषणं च धारयन्ति । नासिकामुद्रिकाम्, स्थूलाकारकर्णिमुद्रिकां च आभूषणरूपेण धारयन्ति । एतेषां मातृभाषा मगरभाषा अस्ति । व्यवहाराय नेपालिभाषायाः प्रयोगं कुर्वन्ति । एतेषां समाजे विजयादशमी, दीपावली, मकरसङ्क्रान्तिः इत्यादीनि पर्वाणि उत्सवरूपेण मन्यन्ते । मनोरञ्जनार्थं कौरा, हुर्रा इत्यादिनृत्यानि प्रसिद्धानि सन्ति ।

अन्नपूर्णहिमालयस्य समीपस्थं पर्वतीयक्षेत्रं गुरुङप्रजातीयानां मूलनिवासः मन्यते । विशेषतः कास्की-लमजुङ-मुस्ताङ-मनाङ-पर्वत-स्याङ्जामण्डलेषु एते निवसन्ति परन्तु अधुना देशस्य विविधेषु क्षेत्रेषु तराईप्रदेशे च एतेषां निवासः वर्धमानः वर्तते । इतिहासेषु पुराणेषु च प्रसिद्धाः

हूणजातयः एव आधुनिकसमाजे 'गुरुङ'नाम्ना प्रसिद्धाः वर्तन्ते इति विद्वांसः वदन्ति । धौतवस्त्रम्, कञ्चुकः, शिरोवेष्टनम्, गञ्जावस्त्रं च एतज्जातीयानां पुरुषाणां प्रमुखाणि परिधानानि सन्ति । एतेषां कट्यां क्षुरप्रकोशः सदैव भवति । महिलाः च शाटिकावस्त्राञ्चलम्, श्वेतं कटिबन्धनम्, चोलिकाम्, गुणनाकारं प्रावारविशेषं च धारयन्ति । काचमुद्रिका, नासिकाभूषणम्, नासिकामुद्रिका, शिरोविन्दुः, कर्णपुष्पम् चेत्यादीनि आभूषणानि धारयन्ति । तथैव कर्णविष्टनभूषणम्, कर्णभूषणम्, नवसुवर्ण-गोलमालिका, स्वर्णमुद्रिकामाला च एतासाम् आभूषणानि सन्ति । गुरुङभाषा एतेषां मातृभाषा मन्यते ।



गुरुङप्रजातीयाः मूलतः प्रकृतिपूजकाः बोनधर्मावलम्बिनः सन्ति । एतेषां पुरोहिताः 'लामा, घ्याब्रे' इत्यादिनाम्ना कथ्यन्ते । एते हिन्दुधर्मं बौद्धधर्मं च मानयन्ति । तदनुसारेण एव एतेषां संस्काराः सन्ति । मगरजातीयानां गुरुङजातीयानां च संस्काराः बहुशः समानाः एव सन्ति । पुत्राणां क्षौरम्, पुत्रीणां वस्त्रदानसंस्कारं च एते अष्टमे द्वादशे वा वर्षे कुर्वन्ति । एते विजयादशमीम्, दीपावलीम्, मकरसङ्क्रान्तिं च विशेषतया मानयन्ति । पौषमासस्य पञ्चदशे दिवसे एतेषां 'तमु ल्होसार' इति विशेषं पर्व उत्सवरूपेण मन्यते । एते इदं दिनं नववर्षरूपेन च मानयन्ति । सोरठीनृत्यम्, घाटुनृत्यं च एतेषां समाजे अतीव लोकप्रिये मन्येते । श्रीपञ्चमीम् आरभ्य वैशाख-पूर्णिमापर्यन्तं घाटुनृत्यस्य अभिनयः प्रचलति । संस्काराणाम् आदानाय प्रदानाय च एते रोधीं वसन्ति । रोधीगृहं निश्चित्य रात्रौ वृद्धाः हस्तकलाः शिक्षयन्ति । युवकाः युवतयश्च परस्परं मिलित्वा गीतं गायन्ति, नृत्यन्ति च ।

मगरजातीयाः गुरुङजातीयाः च जनाः आजीविकायै विशेषतः कृषिकर्म, पशुपालनं च कुर्वन्ति ।

गुरुङसमाजे युवकाः युवतयः च समूहं निर्माय कृषिकर्माणि कुर्वन्ति । एतादृशः समूहः 'हुरी' इति कथ्यते । हिमालय-समीपवर्तिषु क्षेत्रेषु जनाः वंशद्वारा भारवाहि-वंशपात्रम्, भारवाहिनीं रज्जुम्, वंशास्तरणीम्, चक्रलाम्, अन्यानि च बहूनि उपयोगीनि वस्तूनि उत्पादयन्ति । गृहनिर्माणे मगरजातीयानां कौशलं विशेषं मन्यते । गुरुङजातीयानां मगरजातीयानां च पुरुषाणां सैन्यक्षेत्रे विशेषा प्रसिद्धिः अस्ति । नेपालस्य एकीकरणे अपि एतेषां महती भूमिका आसीत् इति इतिहासविदः वदन्ति । अधुना निजामतिक्षेत्रे, शिक्षाक्षेत्रे, राजनीतिकक्षेत्रे, व्यापारक्षेत्रे, चिकित्साक्षेत्रे, अन्येषु च विविधेषु क्षेत्रेषु एतेषां संलग्नता वर्तते ।

बगैँचामा धेरै थरी फूल हुन्छन् । फूलको फरक फरक रङ र सुगन्ध हुन्छ । हाम्रो देशमा पनि धेरै जति छन् । ती जातिको पनि भिन्न भिन्न संस्कृति र परम्परा छन् । यस्तो विविधता नेपालको विशेषता हो । वातावरणअनुसार मानिसको खानपान र रहनसहन एवम् वेशभूषा फरक हुन्छ । हिमाल, पहाड र तराई क्षेत्रमा फरक संस्कृति छ ।

नेपालको पश्चिमी भूभागको पहाडी क्षेत्रमा मगर जातिका मानिस बस्छन् । देशका सबै क्षेत्रमा बसे पनि विशेषतः गण्डकी, लुम्बिनी र कर्णाली प्रदेश यिनीहरूको प्रमुख बसोबास क्षेत्र हो । मगरहरू विशेषतः हिन्दु धर्म र बौद्ध धर्म मान्दछन् । तसर्थ हिन्दु संस्कारअनुसार र बौद्ध परम्पराअनुसार नै संस्कारहरू हुन्छन् । छैठी, न्वारान, पास्नी, विवाह आदि संस्कार विशेषतः प्रसिद्ध छन् । मगर समुदायमा पास्नी (अन्नप्राशन) लाई 'पूरभदै' भनिन्छ । पाँचौं वर्षमा छोराको छेवर र छोरीको गुनिउँचोली गरिन्छ । पहिले मामाचेली र फुपूचेलाबिच विवाह गर्ने परम्परा भए पनि अहिले त्यो अनिवार्य छैन ।

यस जातिका पुरुषहरू मोटो, धोती, पटुकी एवम् भाङ्ग्रो लगाउँछन् । महिलाहरू चोलो, गुनिउँ एवम् पटुकी लगाउँछन् । महिलाहरू पोते, मुगा, फुली, बुलाकी, मारबाडी आदि लगाउँछन् । यिनीहरू मगर भाषा बोल्छन् । व्यवहार चलाउन नेपाली भाषा पनि प्रयोग गर्दछन् । यिनीहरूको समाजमा दसैं, तिहार, माघेसङ्क्रान्ति इत्यादि पर्व उत्सवका रूपमा मानिन्छन् । मनोरञ्जनका लागि कौरा, हुर्रा आदि नाच नाच्दछन् ।

अन्नपूर्ण हिमालको नजिकको क्षेत्रमा गुरुङ जातिका मानिस बस्छन् । विशेषतः कास्की, लमजुङ, मुस्ताङ, मनाङ, पर्वत, स्याङ्जा आदि जिल्लामा यिनीहरू बस्दछन् तर अहिले देशका सबै भूभागमा छरिएर रहेका छन् । विद्वान्हरूका अनुसार इतिहास एवम् पुराणमा प्रसिद्ध हूण जातिका मानिस नै गुरुङ हुन् । यिनीहरूको कम्मरमा सधैं खुर्पेटो हुन्छ ।

महिलाहरू गुनिउँ, सेतो पटुकी, चोलो एवम् घलेक लगाउँछन् । यिनीहरू पोते, फुली, बुलाकी, शिरबिन्दी, कर्णफूल, नौगेडी आदि आभूषण लगाउँछन् ।

गुरुङ जातिका मानिस मूलतः प्रकृतिपूजक बोन धर्मावलम्बी हुन् । यिनीहरूका पुरोहितलाई लामा वा घ्याब्रे भनिन्छ । यिनीहरू हिन्दु या बौद्ध धर्म मान्दछन् । त्यसैअनुसार यिनीहरूको संस्कार हुन्छ । मगर र गुरुङ संस्कार धेरैजसो उस्तै हुन्छन् । यिनीहरू छोराको छेवर र छोरीको गुनिउँचोली आठौँ या बाह्रौँ वर्षमा गर्दछन् । यिनीहरू दसैँ, तिहार, माघेसङ्क्रान्ति पनि विशेष रूपमा मनाउँछन् । पुस महिनाको १५ गते यिनीहरूको तमु ल्होसार पर्व पर्दछ । सोरठी र घाटु नाच यिनीहरूको समुदायमा लोकप्रिय छन् । संस्कारको आदान प्रदानका लागि यिनीहरू रोधी बस्छन् । रोधीघर तोकेर राति वृद्धवृद्धा हस्तकला सिकाउँछन् भने युवायुवति गीत गाउने र नाच्ने गर्दछन् ।

मगर र गुरुङ जातिका मानिस जीविकोपार्जनका लागि कृषि एवम् पशुपालन गर्छन् । गुरुङ समाजमा युवायुवति समूह बनाएर कृषि गर्दछन् । यस्तो समूहलाई 'हुरी' भनिन्छ । हिमाली क्षेत्रका मानिस बाँसको डोको, नाम्लो, मान्द्रो, चकटी आदि बनाउँछन् । घर बनाउने काममा मगरको सिप विशेष मानिन्छ । गुरुङ एवम् मगर जातिका युवाको सैन्य क्षेत्रमा विशेष प्रसिद्धि छ । नेपालको एकीकरणमा यिनीहरूको विशेष भूमिका रहेको इतिहासविद्हरू बताउँछन् । अहिले शिक्षा, राजनीति, व्यापार, चिकित्सा आदि क्षेत्रमा समेत यिनीहरू संलग्न छन् ।

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| विविधाः | विभिन्नाः | अनेक | Diverse |
| परम्परा | प्रथा | परम्परा | Tradition |
| विविधता | अनेकता | अनेकथरी हुनु | Diversity |
| परिधानम् | वेशः | पहिरन | Dress |
| निवासः | आवासः | बसोबास | Residence |
| बाहुल्येन | प्राचुर्येण | धेरैजसो | Mostly |
| षष्ठिका | जन्मनः षष्ठदिवसे पूजनीया देवी | छैटी | The Goddess worshiped in the sixth day of birth |

| | | | |
|---|---|---|---|
| नामकरणम् | शिशोः नामनिश्चयस्य संस्कारः | न्वारान | Naming ceremony |
| अन्नप्राशनम् | शिशोः प्रथमवारम् अन्नप्राशनस्य संस्कारः | पास्नी | First feeding ceremony for infant |
| क्षौरम् | केशच्छेदनम् | छेवर | The culture of first-haircutting |
| वस्त्रप्रदानम् | कन्यायै वस्त्रप्रदानस्य संस्कारविशेषः | गुनिउँचोली | Blouse and Sari given to a girl |
| मातुलकन्या | मातुलस्य पुत्री | मामाकी छोरी | Daughter of maternal uncle |
| अनिवार्यम् | अवश्यम् करणीयम् | अनिवार्य | Compulsory |
| कञ्चुकः | वस्त्रविशेषः | भोटो | Weistcoat, Sleevless jacket |
| धौतवस्त्रम् | अधोवस्त्रविशेषः | धोती | Long often elaborately pleated lion cloth |
| कटिबन्धनम् | कटिप्रदेशे बन्धनीयम् वस्त्रम् | पटुकी | Waistband |
| गञ्जावस्त्रम् | वस्त्रविशेषः | भाङ्ग्रो | A coarse lind of sack, cloth made from the fibre of plants, Jute Brasserie |
| चोलिका | वक्षस्त्राणम् | चोलो | Bodice |
| शाटिकावस्त्रा-ञ्चलः | अधोवस्त्रविशेषः | गुनिउँ | Skirt |
| काचगुटिका | नारीणाम्, कण्ठभूषण-विशेषः | पोते | Fine glass beads |
| प्रबालमाला | अलङ्कारविशेषः | मुगाको माला | Coral chain |
| नासिकाभूषणम् | नारीणाम् अलङ्कृतिविशेषः | फुली | Ornament worn by women on the Noseside |

| | | | |
|---|---|---|---|
| नासिकामुद्रिका | नासिकाभूषणविशेषः | बुलाकी | Nosependant |
| स्थूलाकारकर्णि-मुद्रिका | कर्णभूषणविशेषः | मारवाडी | Ornament put on the lobe by women |
| मातृभाषा | प्रथमभाषा | आमाबाट सिकेको भाषा (सबैभन्दा पहिले सिकेको भाषा) | Mother tongue |
| मकरसङ्क्रान्तिः | माघसङ्क्रान्तिः | माघेसङ्क्रान्ति | First day of Magh |
| मनोरञ्जनार्थम् | चित्तविनोदार्थम् | मनोरञ्जनका लागि | For entertainment |
| पर्वतीयक्षेत्रम् | पर्वतीयभूभागः | पहाडी क्षेत्र | Hill area |
| वर्धमानः | ऋधमानः | बढिरहेको | Increasing |
| विद्वांसः | विज्ञजनाः | विद्वान्हरू | Scholars |
| शिरोवेष्टनम् | शिरोवस्त्रविशेषः | पगरी | Turban |
| क्षुरप्रकोशः | अस्त्रविशेषाधानी | खुर्पेटो | Case for Khurpa a homemade weapon |
| गुणनाकारः प्रावारविशेषः | गुरुङजातीयमहिलानां वस्त्रविशेषः | घलेक | Coverlet-like clothes worn by Gurung women |
| शिरोबिन्दुः | नारीणां शिरोभूषणविशेषः | शिरबन्दी | Ornament worn on the head by women |
| कर्णपुष्पम् | कर्णाभूषणविशेषः | कर्णफूल | Flower-like ear ornament |
| कर्णाविष्टन-भूषणम् | कर्णाभूषणविशेषः | | Series of earrings worn in the earlobe |
| कर्णभूषणम् | आभरणविशेषः | ढुङ्ग्री | Kind of earring |
| नवसुवर्णगोल-कमालिका | कण्ठाभरणविशेषः | नौगेडी | A kind of necklace made of nine golden balls |
| पुरोहितः | कुलगुरुः | पुरोहित | Priest |
| बहुशः | प्रायः | धेरैजसो | Usually |
| लोकप्रियम् | जनप्रशस्तम् | लोकप्रिय | Popular |

| | | | |
|---|---|---|---|
| अभिनयः | नाटकीयं प्रदर्शनम् | अभिनय | Acting |
| हस्तकला | हस्तशिल्पम् | हातद्वारा विभिन्न सामग्री बनाउने कला | Handicraft-art |
| आजीविका | जीवनवृत्तिः | जीवन धान्न गरिने काम | Livelihood |
| हिमालयसमीप-वर्ति | हिमालयसमीपस्थम् | हिमालनजिकको | Near the Himalaya |
| भारवाहि-वंशपात्रम् | वंशनिर्मितपात्रविशेषः | डोको | Wicker basket |
| भारवाहिनी रज्जुः | रज्जुनिर्मितः उपकरणविशेषः | नाम्लो | Rope or band passed round the forehead supporting a load carried on the back |
| वंशास्तरणी | वंशकटः | मान्द्रो | Bamboo mat |
| चक्रुला | आसनिका | चकटी | Small cushion |
| कौशलम् | शिल्पम् | सिप | Skill |
| सैन्यक्षेत्रम् | सुरक्षाक्षेत्रम् | सेना, प्रहरी आदि सैन्यक्षेत्र | Military sector |
| महती | महत्त्वपूर्णा | ठूलो | Great |
| इतिहासविदः | पुरावृत्तज्ञाः | इतिहास जान्नेहरू | Historians |

## अभ्यासः

### श्रवणं भाषणं च

१. अधो लिखितानां शब्दानां शुद्धम् उच्चारणम् कुरुत

पर्वतीयक्षेत्रे, गण्डकीप्रदेशस्य, बौद्धधर्मानुसारेण, अन्नप्राशनसंस्कारः, सङ्क्रान्तिः

२. पाठस्य द्वितीयम् अनुच्छेदं शिक्षकात् श्रुत्वा प्रश्नानाम् उत्तराणि दत्त

(क) मगरजातीयाः बाहुल्येन कुत्र निवसन्ति ?

(ख) अन्नप्राशनसंस्कारः मगरसमुदाये केन नाम्ना प्रसिद्धः अस्ति ?

(ग) मगरसमुदाये पुत्रस्य क्षौरं कतमे वर्षे भवति ?

(घ) अधुना मातुलपुत्र्या सह विवाहः अनिवार्यः वर्तते न वा ?

(ङ) मगरसमुदाये पञ्चमे वर्षे पुत्र्याः कः संस्कारः भवति ?

३. अस्माकं समाजे कानि पर्वाणि मन्यन्ते ? पञ्चानां पर्वणां नामानि वदत ।

४. अस्माकं समुदाये महिलाः पुरुषाः च कानि वस्त्राणि धारयन्ति ? केषाञ्चन पञ्चानां नामानि कथयत ।

५. पाठस्य प्रथमम् अनुच्छेदं गुरुमुखात् श्रुत्वा पुस्तिकायां लिखत ।

६. श्रवणपाठं श्रुत्वा प्रश्नान् उत्तरयत

(क) वानराः कम् अन्वगच्छन् ?

(ख) कः वानरान् धावयितुं विवेकानन्दम् अशिक्षयत् ?

(ग) कीदृशं विवेकानन्दं दृष्ट्वा वानराः पलायन्त ?

(घ) विवेकानन्दः कं गुरुं मनुते ?

(ङ) कः सदैव विजयी भवति ?

## पठनम्

१. पाठस्य सर्वान् अनुच्छेदान् एकैकम् पठत ।

२. अधो लिखितानां शब्दानां शुद्धम् उच्चारणम् कुरुत

पर्वतीयक्षेत्रे, गण्डकीप्रदेशस्य, बौद्धधर्मानुसारेण, अन्नप्राशनसंस्कारः, सङ्क्रान्तिः

३. अधस्तनम् अनुच्छेदं पठित्वा प्रश्नानामुत्तराणि वदत

सोरठीनृत्यम् एकं परम्पराप्राप्तं लोकनाटकं वर्तते । इदं नृत्यं चतुर्दशदिनानि यावत् प्रचलति । अस्मिन् नृत्ये नर्तकाः, गायकाः, वाद्यवादकाश्च मिलित्वा सामान्यतः द्वादश ततः अधिकाः वा कलाकाराः भवन्ति । तेषु गायकाः, मर्दलवादकाः, पुर्सिङ्गे, मारुनी चेति भवन्ति । महिलावेषधारी पुरुषः 'मारुनी' इति कथ्यते । प्रमुखगायकस्य निर्देशनानुसारेण मर्दलस्य तालम् अनुसृत्य अन्ये कलाकाराः गायन्ति, तदनुसारेण एव नर्तकाः नृत्यन्ति । अस्मिन् नृत्ये रामकथाम्, कृष्णकथां च गीतिमाध्यमेन प्रस्तुवन्ति । नर्तकाः च तेषामेव अभिनयं कुर्वन्तः

नृत्यन्ति । नृत्यस्य आरम्भे सरस्वत्याः आवाहनं भवति । गायकेषु पुरुषाणां महिलानां च समूहः भवति । प्रथमं पुरुषाः गायन्ति, तदनु महिलाः गायन्ति । सोरठीनृत्यं नेपालस्य महत्त्वपूर्णा संस्कृतिः विद्यते । किन्तु आधुनिकसमाजे इयं लोकसंस्कृतिः लुप्यमाना इव विद्यते । संरक्षणस्य अभावेन सोरठीनृत्यस्य मौलिकं सङ्गीतम्, लयज्ञानं च क्रमशः लुप्यमानं वर्तते इति संस्कृतिविदः वदन्ति । एतस्य संरक्षणाय सर्वैः मिलित्वा प्रयासः करणीयः ।

सोरठी नृत्य परम्परागत लोकनाटक हो । यो नाच चौध दिन चल्छ । यस नृत्यमा नाच्ने, गाउने, बजाउने गरी बाह्र वा सोभन्दा बढी कलाकार संलग्न हुन्छन् । तिनीहरूमध्ये गायक, मादले, पुर्सिङ्गे एवम् मारुनी हुन्छन् । गीतअनुसार मादलको चालमा नाच्नेहरू नाच्छन् । सुरुमा सरस्वती जगाइन्छ । गायनमा पुरुष एवं महिलाको समूह हुन्छ । पहिले पुरुषहरू गाउँछन् र त्यसपछि महिलाहरू गाउँछन् । अहिले यो संस्कृति लोप हुँदै गएको छ । यसको सबै मिलेर संरक्षण गर्नुपर्दछ ।

(क) सोरठीनृत्यं कति दिनानि यावत् प्रचलति ?

(ख) अस्मिन् नृत्ये कति कलाकाराः भवन्ति ?

(ग) कः 'मारुनी' इति कथ्यते ?

(घ) नृत्यस्य आरम्भे किं भवति ?

(ङ) संस्कृतिविदः किं वदन्ति ?

## ४. अधस्तनानि पदानि प्रयुज्य वाक्यनिर्माणं कृत्वा शिक्षकं श्रावयत

विविधता, धौतवस्त्रम्, बाहुल्येन, पशुपालनम्, आधुनिकसमाजे

## ५. पाठस्य पञ्चमम् अनुच्छेदम् पठित्वा रिक्तस्थानानि पूरयत

(क) गुरुङजातीयाः मूलतः ------- सन्ति । (प्रकृतिपूजकाः, ईश्वरोपासकाः)

(ख) गुरुङसमुदाये पुत्राणां क्षौरम् ------- वर्षे भवति । (अष्टमे, पञ्चमे)

(ग) 'तमु-ल्होसार' ------- मासे भवति । (ज्येष्ठमासे, पौषमासे)

(घ) 'घाटुनृत्यम्' ------- आरभ्यते । (श्रावणसङ्क्रान्तौ, वसन्तपञ्चम्याम्)

(ङ) रोधीगृहे वृद्धाः ------- शिक्षयन्ति । (हस्तकलाम्, गीतम्)

६. अधस्तनं गद्यं पठित्वा कोष्ठात् समुचितानि पदानि विचित्य रिक्तस्थानानि पूरयत

संस्कृतभाषायां बहवः कोशग्रन्थाः सन्ति । अमरकोशः अपि तेषु एकः प्रमुखः कोशग्रन्थः मन्यते । एतस्य ग्रन्थस्य रचयिता अमरसिंहः अस्ति । विक्रमादित्यस्य नवरत्नेषु अपि एतस्य नाम उल्लिखितम् अस्ति । अमरसिंहस्य अनेकाः कृतयः आसन् इति विद्वांसः कथयन्ति किन्तु अधुना अमरकोशः एव उपलभ्यते । केचन एतस्य पूर्णं नाम अमरसिंहबाणा आसीत् इति विश्वसन्ति । अमरकोशस्य मङ्गलपद्यं बुद्धस्य स्तुतिरूपम् अस्ति अतः एषः बौद्धमतावलम्बी आसीत् इति केचन अनुमानं कुर्वन्ति । शङ्कराचार्येण सह अनेन शास्त्रार्थः कृतः इति अपि किंवदन्ती श्रूयते । अमरसिंहः संस्कृतस्य अद्वितीय विद्वान् मन्यते ।

**अद्वितीयः विद्वान्, अमरसिंहबाणा, बुद्धस्य स्तुतिरूपम्, शङ्कराचार्येण सह, अमरसिंहः**

| | |
|---|---|
| अमरकोशस्य रचयिता | ------------------------------------------ |
| अमरसिंहस्य वंशः | ------------------------------------------ |
| अमरसिंहः संस्कृतस्य | ------------------------------------------ |
| अमरकोषस्य मङ्गलपद्यम् | ------------------------------------------ |
| शास्त्रार्थः | ------------------------------------------ |

## लेखनम्

१. अधस्तनपदानि शुद्धानि कृत्वा पुस्तिकायां लिखत

देसश्य, बौद्धधर्माबलम्बिनः, पौसमाशस्य, वैशाखपूर्णिमा, सिछ्ययन्ति

२. अधो लिखितानां प्रश्नानाम् उत्तराणि लिखत

(क) वातावरणानुसारेण किं किं भिन्नं भवति ?

(ख) मगरजातीयाः बाहुल्येन कुत्र निवसन्ति ?

(ग) मगरसमाजे के संस्काराः प्रसिद्धाः सन्ति ?

(घ) मगरजातीयपुरुषाः किं धारयन्ति ?

(ङ) मगरसमुदाये मनोरञ्जनार्थं कानि नृत्यानि प्रसिद्धानि ?

(च) गुरुङजातीयानां मूलनिवासः कः ?

(छ) आधुनिकसमाजे 'गुरुङ' नाम्ना के प्रसिद्धाः ?

(ज) गुरुङसमुदायस्य महिलाः कानि आभूषणानि धारयन्ति ?

(झ) रोधीगृहे वृद्धाः युवकाः युवतयः च किं कुर्वन्ति ?

(ञ) कीदृशः समूहः 'हुरी' कथ्यते ?

(ट) मगरजातीयाः गुरुङजातीयाः च जनाः अधुना केषु क्षेत्रेषु संलग्नाः सन्ति ?

३. अधस्तनानि पदानि प्रयुज्य वाक्यानि रचयत

अधुना, धारयन्ति, महत्त्वम्, प्रकृतिपूजकाः, विवाहः, पशुपालनम्

४. मगरसमुदाये गुरुङसमुदाये च प्रचलितानां नृत्यानां नामानि लिखत ।

५. परस्परं मेलयत

| समूहः 'क' | समूहः 'ख' |
|---|---|
| पुत्रस्य क्षौरम् | पौषमासे |
| घाटुनृत्यम् | पञ्चमे वर्षे |
| विवाहः | वैशाखपूर्णिमापर्यन्तम् |
| 'तमु ल्होसार' पर्व | मातुलपुत्र्या सह |

६. अधो लिखितानि वाक्यानि पठित्वा रिक्तस्थानानि पूरयत

नद्यां बहु जलं वहति । उद्याने बहूनि पुष्पाणि विकसन्ति । वंशेन निर्मितं वस्तु सुन्दरं भवति । हिमालयसमीपस्थाः जनाः वंशैः उपयोगीनि वस्तूनि उत्पादयन्ति । मधु मधुरं भवति । अनुजः मधुरं मधु पिबति ।

(क) युवतयः ...... (बहु, बहूनि) कार्याणि कुर्वन्ति ।

(ख) क्षेत्रे ...... (बहु, बहूनि) अन्नम् फलति ।

(ग) सङ्ग्रहालये पुरातनानि ...... (वस्तु, वस्तूनि) सन्ति ।

(घ) मम भगिन्याः नेत्रे ...... (अश्रु, अश्रूणि) वहति ।

७. बहु, बहूनि, वस्तु, वस्तूनि इति पदानि प्रयुज्य पञ्चभिः वाक्यैः स्वस्य गृहस्य वर्णनम् कुरुत ।

**रचनात्मकः अभ्यासः**

१. कोष्ठस्थविवरणानुसारेण दशभिः वाक्यैः लिम्बुसंस्कृतेः वर्णनं कुरुत

जातिः - लिम्बुः
निवासक्षेत्रम् - पूर्वदिग्भागस्य पर्वतीयक्षेत्रम्
भाषा - लिम्बुभाषा
धर्मग्रन्थः - मुन्धुमः
पर्वाणि - वैशाखपूर्णिमा, श्रावणसङ्क्रान्तिः, मकरसङ्क्रान्तिः, मार्गपूर्णिमा च
आजीविका - कृषिः, पशुपालनं च

२. स्वसमुदायस्य संस्कृतेः विषये सरलशब्दैः एकम् अनुच्छेदं लिखत ।

४. चित्राधारेण वर्णनं कुरुत

**श्रवणपाठः**

स्वामी विवेकानन्दः वाराणस्याम् आसीत् । सः एकदा अन्नपूर्णायाः दर्शनार्थम् अगच्छत् । अन्नपूर्णायाः दर्शनानन्तरं सः बहिः निरगच्छत् । सः आश्रमं गच्छन् आसीत् । वानराः तम् अन्वगच्छन् । विवेकानन्दः एकाकी आसीत् । वानराणां सङ्ख्या दशाधिका आसीत् । वानरान् दृष्ट्वा विवेकानन्दः भीतवान् । सः धावितुम् आरभत । वानराः अपि तम् अन्वधावन् । विवेकानन्दः शीघ्रम् अधावत् । वानराः अपि शीघ्रमेव अन्वधावन् । एकः वृद्धः संन्यासी विवेकानन्दं वानरान् च अपश्यत् । सः विवेकानन्दम् अकथयत्, "भो युवक ! मा पलायस्व । भयं त्यक्त्वा वानरान् धावय । वानराः स्वयमेव पलायन्ते ।" संन्यासिनः कथनं श्रुत्वा विवेकानन्दः स्थिरः अभवत् । सः एकं शिलाखण्डं गृहीत्वा वानराणां सम्मुखम् अधावत् । आगच्छन्तं विवेकानन्दं दृष्ट्वा वानराः पलायन्त । शिलाखण्डस्य प्रहारं विना एव वानराः विवेकानन्दाद् दूरम् अगच्छन् । विवेकानन्दः संन्यासिनः समीपम् अगच्छत् । संन्यासिनः पादौ स्पृशन् सः अकथयत्, "भो महात्मन् ! भवान् मम गुरुः अस्ति । भवतः वचनात् अद्य अहं महत्त्वपूर्णां शिक्षां प्राप्नवम् । एषा शिक्षा जीवनोपयोगिनी अस्ति । जीवने अनेकाः समस्याः आगच्छन्ति । ताः दृष्ट्वा यः पलायते, सः कदापि विजयं न लभते । यः समस्यानां समाधानाय सङ्घर्षं करोति, सः सदैव विजयी भवति ।"

## एकादशः पाठः

# रोगकारणम्

मित्रैः सह विमर्शः




**अनम्बुपानाद् विषमाशनाच्च दिवाशयाद् जागरणाच्च रात्रौ ।**
**सन्धारणाद् मूत्रपुरीषयोश्च षड्भिः प्रकारैः प्रभवन्ति रोगाः ॥**

| रोगका कारण | |
| --- | --- |
| १. आवश्यकताअनुसार पानी नपिउनु | २. खानामा अनियमितता हुनु |
| ३. दिउँसो सुत्नु | ४. राति नसुत्नु |
| ५. पिसाब रोकेर राख्नु | ६. दिसा निष्काशन नियमित नहुनु । |

# आयुर्वेदः

**धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ।**



इमां सदुक्तिं वयं वारं वारं शृण्मः । आरोग्यम् आयुर्वेदं च अन्तरा अविच्छिन्नः सम्बन्धः वर्तते । आयुर्वेदचिकित्सा आरोग्यं रक्षितुं सर्वोत्तमा मन्यते ।

आयुर्वेदः विश्वस्य प्राचीनतमा चिकित्सापद्धतिः वर्तते । इयं पद्धतिः पौरस्त्यचिकित्साशास्त्ररूपेण जगति प्रसिद्धा अस्ति । इदं शास्त्रम् आयुषः ज्ञानस्य लाभस्य स्थिरतायाः च प्रतिपादनं करोति । आयुः धर्मस्य, अर्थस्य, सुखस्य च साधनम् अस्ति । अत एव धर्मार्थसुखानां प्राप्तये आयुषः रक्षा अनिवार्या भवति । तस्य कृते नित्यम् आयुर्वेदस्य अध्ययने प्रयोगे च जनानां प्रवृत्तिः आवश्यकी भवति । आयुषः स्थिरतायै स्वास्थ्यम् अपेक्षितं भवति । स्वस्थस्य भावः एव स्वास्थ्यं वर्तते । समकायः, समाग्निः, समधातुः, सममलः, समक्रियः, प्रसन्नेन्द्रियः, प्रसन्नात्मा च जनः स्वस्थः मन्यते । एतेषां प्राप्तये जनैः आहारस्य, विहारस्य, निद्रायाः च सम्यक् उपयोगः कर्तव्यः । आयुर्वेदानुसारेण ब्रह्मचर्यस्य परिपालनस्य अपि स्वास्थ्यरक्षणे महती भूमिका भवति ।

आयुर्वेदस्य द्वे प्रयोजने स्तः - नीरोगिणां स्वास्थ्यसंरक्षणम्, रोगिणां रोगनिवारणं च । अस्य प्रथमं ध्येयं स्वस्थस्य जनस्य स्वास्थ्यरक्षणं वर्तते । नित्यम् आयुर्वेदेन उपदिष्टान् नियमान् अङ्गीकुर्वाणाः जनाः रोगमुक्ताः भवन्ति । यदि जनाः अस्वस्था न भवन्ति तर्हि रोगाणां निवारणस्य चिन्ता एव न भवति ।

आयुर्वेदस्य अपरं प्रयोजनम् अस्वस्थजनानां रोगस्य निवारणम् अस्ति । मानवाः अन्ये प्राणिनः च विविधकारणैः अस्वस्था जायन्ते । तेषु अधिकतराणि कारणानि आचरणजानि भवन्ति । रोगिणां रोगस्य अपनयनाय आयुर्वेदेन महद् अनुसन्धानं विहितं वर्तते । रोगाणां प्रकृत्यनुसारेण चिकित्सायै आयुर्वेदः अष्टसु विभागेषु विभक्तः अस्ति । एते विभागाः एव आयुर्वेदस्य अष्ट अङ्गानि सन्ति । अष्टसु अङ्गेषु विभागस्य कारणेन आयुर्वेदः अष्टाङ्गः कथ्यते । तानि अङ्गानि यथा - शल्यतन्त्रम्, शालाक्यतन्त्रम्, कायचिकित्सा, भूतविद्या, कौमारभृत्यम्, अगदम्, रसायनतन्त्रम्, वाजीकरणतन्त्रं च । एतेषु अङ्गेषु विविधप्रकृतिकानां रोगाणां शमनस्य उपायाः उपदिष्टाः सन्ति । आधुनिक्यां चिकित्सापद्धतौ अपि एतैः सदृशाः एव विभागाः दृश्यन्ते । आधुनिकचिकित्सापद्धतेः प्रमुखः आधारः आयुर्वेदः एव वर्तते ।

आयुर्वेदस्य इतिहासः वैदिककालाद् एव आरभ्यते । आयुर्वेदस्य स्रोतो ग्रन्थः अथर्ववेदः अस्ति । चतुर्षु उपवेदेषु अयम् अथर्ववेदस्य उपवेदः वर्तते । ऋग्वेदे अपि आयुर्वेदस्य **चर्चा** विद्यते । केचन विद्वांसः आयुर्वेदं पञ्चमवेदरूपेण अपि स्वीकुर्वन्ति । उपनिषत्सु पुराणेषु अन्येषु अपि बहुषु ग्रन्थेषु आयुर्वेदस्य वर्णनं प्राप्यते । बौद्धग्रन्थेषु जैनग्रन्थेषु अपि आयुर्वेदस्य चर्चा विहिता वर्तते ।

चरकः, सुश्रुतः, वाग्भटः च आयुर्वेदस्य प्रमुखाः आचार्याः सन्ति । एतैः अन्यैः च विद्वद्भिः अष्टाङ्गस्य आयुर्वेदशास्त्रस्य विस्तृतं व्यवस्थितं च वर्णनं विहितम् । चरकेण महता अनुसन्धानेन विरचिता चरकसंहिता आयुर्वेदस्य प्रधानः ग्रन्थः वर्तते । तथैव सुश्रुतेन कृता सुश्रुतसंहिता, वाग्भटेन ग्रथितम् अष्टाङ्गहृदयम् च प्रमुखौ आयुर्वेदग्रन्थौ वर्तेते । एवं माधवकरस्य माधवनिदानम्, शाङ्र्गधरस्य शाङ्र्गधरपद्धतिः इत्यादयः ग्रन्थाः अपि आयुर्वेदे प्रसिद्धाः सन्ति । संस्कृतभाषायां विरचितानाम् एतेषां ग्रन्थानां विविधासु भाषासु व्याख्याः विहिताः प्राप्यन्ते । एतेषां ग्रन्थानाम्, आधुनिकस्य अनुसन्धानस्य च माध्यमेन अधुना बहुषु देशेषु आयुर्वेदस्य अध्ययनाध्यापनं प्रचलद् वर्तते ।

अस्माकं देशः दुर्लभैः वृक्षैः वनस्पतिभिः, वनौषधैः च सम्पन्नः वर्तते । अतः अत्र जातानां जनानां कृते आयुर्वेदचिकित्सायाः उपयोगः हितकारी भवति । 'यस्य देशस्य यो जन्तुस्तज्जं तस्यौषधं हितम्' इति आयुर्वेदेन प्रतिपादितं विद्यते । मानवः यस्मिन् देशे जायते तत्र उत्पन्नानि औषधानि तस्य हितं कुर्वन्ति इति अस्य आशयः वर्तते । अयं विषयः वैज्ञानिकैः अनुसन्धानैः सिद्धः वर्तते । विविधानां रोगाणाम् औषधस्य अन्वेषणक्रमे पाश्चात्त्यचिकित्सायाः अनुसन्धातृभिः अपि इदं तथ्यं स्वीकृतं वर्तते । अनेन अस्माकं देशे आयुर्वेदस्य महती उपयोगिता विज्ञायते ।

पाश्चात्य-चिकित्सा-पद्धत्या असाध्यत्वेन घोषिता अपि कतिपयरोगाः आयुर्वेदक-चिकित्सया शमिताः भवन्ति । आयुर्वेदचिकित्सा दुष्प्रभावरहिता न्यूनतम-दुष्प्रभावकारी वा भवति । पाश्चात्त्यचिकित्सायाः महता दुष्प्रभावेण आहताः जनाः सम्प्रति आयुर्वेदं प्रति समाकृष्टाः दृश्यन्ते । दैनन्दिन-जीवने आयुर्वेदेन प्रतिपादितान् नियमान् अनुसृत्य वयं निरामयाः भवितुं शक्नुमः । अनेन आरोग्येण साफल्यम् अधिगत्य दीर्घजीवनं च यापयामः ।

धर्म, अर्थ, काम र मोक्ष चार पुरुषार्थका लागि आरोग्य मुख्य र उत्तम उपाय हो । आयुर्वेद विश्वको सबैभन्दा पुरानो चिकित्सापद्धति हो । यो स्वास्थ्यरक्षाका लागि सर्वोत्तम मानिन्छ । यो पद्धति पूर्वीय र पाश्चात्त्य दुवै क्षेत्रमा प्रसिद्ध छ । स्वास्थ्यरक्षाका लागि आयुर्वेदले बताएका विधि र नियमको पालना गर्नुपर्दछ ।

आयुर्वेदका मुख्य दुई प्रयोजन छन् । पहिलो प्रयोजन निरोगी मानिसको स्वास्थ्यरक्षा हो । दोस्रो प्रयोजन रोगी मानिसको रोगनिवारण हो । यी दुई प्रयोजन पूरा गर्न आयुर्वेद आठ अङ्ग वा भागमा बाँडिएको छ । यी अङ्ग आधुनिक चिकित्सापद्धतिमा पनि भिन्न नामबाट प्रचलित छन् ।

आयुर्वेदको आधारग्रन्थ अथर्ववेद हो । आयुर्वेद अथर्ववेदको उपवेद हो । ऋग्वेद, उपनिषद् र पुराणमा पनि आयुर्वेदको चर्चा गरिएको छ । आयुर्वेदको प्रयोग र विकास विभिन्न आचार्यहरूबाट भएको छ । तिनमा चरक, सुश्रुत, वाग्भट आदि प्रसिद्ध छन् । यिनीहरूका संस्कृत भाषामा लिखित ग्रन्थको विविध भाषामा व्याख्या गरिएको छ । अहिले विभिन्न देशमा आयुर्वेदको पठनपाठन र प्रयोग भइरहेको छ ।

हाम्रो देशमा दुर्लभ वृक्ष, वनस्पति र जडीबुटी पाइन्छन् । आयुर्वेदका दृष्टिले तिनको विशिष्ट महत्त्व छ । आधुनिक चिकित्सा विज्ञानले निको पार्न नसकेका कतिपय रोगहरू आयुर्वेद पद्धतिको प्रयोगबाट निर्मूल भएका छन् । हामी आयुर्वेदले बताएका नियम पालना गरेर निरोगी हुन सक्छौँ ।

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| धर्मः, अर्थः, कामः, मोक्षः | चत्वारः पुरुषार्थाः | चार पुरुषार्थ | Ultimate targets of the human being |
| अन्तरा | मध्ये | बिचमा | In between |
| अविच्छिन्नः | अखण्डितः | अविच्छिन्न | Undivided |
| सर्वोत्तमा | श्रेष्ठा | सर्वोत्तम | Best |
| आयुर्वेदः | आयुर्वेदशास्त्रम् | अथर्ववेदको उपवेद मानिने आयुर्वेद शास्त्र | The sacred science of health or medicine regarded as a supplement of Atharvaveda |
| चिकित्सापद्धतिः | चिकित्सायाः पद्धतिः, रुक्-प्रतिक्रियायाः प्रणाली | उपचार प्रणाली | Method of health treatment |
| जगति | संसारे | संसारमा | In the world |
| आयुः | जीवन-दायकशक्तिः | जीवन दिने शक्ति | Span of life |
| प्रवृत्तिः | प्रवर्तनम् | कुनै कार्यप्रतिको झुकाउ | Tendency |
| समकायः | सन्तुलितशरीरः | शरीर सधैँ एकनासको रहने व्यक्ति | Evergreen body structure |
| समाग्निः | सन्तुलित-जठराग्निः | जठराग्नि सधैँ सम अवस्थामा रहने व्यक्ति | Person having digestive power |
| समधातुः | सन्तुलित-धातुः | शरीरमा रस, रगत, बोसो, मासु आदिको मात्रा सधैँ समान रहने व्यक्ति | One whose physical elements are balanced |

| | | | |
|---|---|---|---|
| सममलः | सन्तुलितमलः | शरीरमा मूत्र, वायु, पित्त, कफ आदिको मात्रा सधैँ समान रहने व्यक्ति | One who have no problem in the excretion system |
| समक्रियः | सन्तुलितक्रियः | प्रतिदिन समान रूपमा शारीरिक, बौद्धिक र इन्द्रियसम्बन्धी कार्य गर्ने व्यक्ति | One who conducts physical and mental exercises everyday |
| प्रसन्नेन्द्रियः | हृष्टेन्द्रियः | इन्द्रियहरू सधैँ प्रसन्न रहने व्यक्ति | One whose organs of sense are satisfied |
| प्रसन्नात्मा | हृष्टमनाः | आत्मा सधैँ प्रसन्न रहने व्यक्ति | Happy |
| ब्रह्मचर्यस्य | वीर्यधारणस्य | वीर्यधारणको | A person who controlls semon |
| ध्येयम् | उद्देश्यम् | उद्देश्य | Goal |
| अपरम् | अनन्तरम् | अर्को | Another |
| निवारणम् | अपनयनम् | हटाउने काम | Prevention |
| प्राणिनः | जन्तवः | प्राणीहरू | Animals |
| आचरणजानि | आचरणाद् जातानि | आचरणबाट जन्मिएका | Character basis |
| रोगिणाम् | व्याधितानाम् | रोगीहरूको | Of patients |
| शल्यतन्त्रम्, शालाक्यतन्त्रम्, कायचिकित्सा, भूतविद्या, कौमारभृत्यम्, अगदतन्त्रम्, रसायनतन्त्रम्, वाजीकरण-तन्त्रम् | आयुर्वेदस्य अष्टानाम् अङ्गानां यथाक्रमं नामानि | आयुर्वेदका आठ अङ्गका क्रमसहित नाम | Names of the eight divisions of Aurveda respectively |
| अपनयनाय | निवारणाय | हटाउनका लागि | For prevention |

| | | | |
|---|---|---|---|
| प्रकृत्यनुसारेण | स्वभावानुरूपम् | स्वभावअनुसार | According to the nature |
| विभक्तः | विभाजितः | भाग लगाइएको | Divided |
| शमनम् | निराकरणम् | निवारण | Prevention |
| उपवेदः | उपगतः वेदः | मुख्य वेदअन्तर्गतको अन्य वेद | Minor Vedas deduced from the Vedas |
| चर्चा | विचारणा | चर्चा | Discussion |
| अथर्ववेदः | चतुर्थः वेदः | चार वेदमध्ये चौथो वेद | The fourth of the Vedas |
| स्रोतोग्रन्थः | बीजग्रन्थः | पहिलो स्रोत पुस्तक | First source book |
| वैदिककालाद् | वैदिकसमयाद् | वैदिक कालदेखि | From the Vedic time |
| ग्रथितम् | विरचितम् | रचना गरिएको | Written |
| सुश्रुतसंहिता | ग्रन्थनाम | सुश्रुतसंहिता नामक ग्रन्थ | The book Sushrutasamhita |
| अष्टाङ्गहृदयम् | ग्रन्थनाम | ग्रन्थको नाम | The book Ashtangahridayam |
| विद्वद्भिः | बुधैः | विद्वान्हरूद्वारा | By the scholars |
| आचार्याः | सिद्धान्तप्रतिपादकाः | विशिष्ट सिद्धान्तका प्रस्तोता विद्वान्हरू | The scholars who propounded distinguished theories |
| यापयामः | व्यतीतं कुर्मः | बिताउँछौं | (We) Spend |
| आरोग्येण | नीरोगितया | नीरोगितासँगै | In the good health |
| निरामयाः | नीरोगिणः | निरोगी | Healthy |
| अनुसृत्य | अनुसरणं कृत्वा | अनुसरण गरेर | Having followed |
| आहताः | प्रताडिताः | चोट पुऱ्याइएका | Wounded |
| दुष्प्रभावरहिता | बाह्य-हानि-हीनः | पार्श्वप्रभाव नभएको | Without side-effect |
| न्यूनतम-दुष्प्रभावकारी | अत्यल्प-हानिकारकः | ज्यादै कम पार्श्वप्रभाव भएको | Minimum side-effected |

| | | | |
|---|---|---|---|
| शमिताः | निवृत्ताः | निको | Free from the disease |
| असाध्यत्वेन | निवारणस्य उपायरहितत्वेन | उपचार नभएका रूपमा | In the incurabe way |
| विज्ञायते | अवबुध्यते | जानिन्छ | To be known |
| अनुसन्धातृभिः | अनुसन्धानकर्तृभिः | अनुसन्धानकर्ताहरूद्वारा | By the researchers |
| उत्पन्नानि | उद्भूतानि | उत्पन्न भएका | Born |
| प्रतिपादितम् | निरूपितम् | प्रमाणित गरिएको | Proved |
| हितम् | लाभदायकम् | फाइदा पुऱ्याउने, लाभकारी | Adventageous |
| तस्यौषधम् | (तस्य+औषधम्) तस्य भैषज्यम् | त्यसका निम्ति औषधी | Medicine for that |
| तज्जम् | तत्र जातम् | त्यहाँ हुने, त्यहीँ उब्जिएको | Originated at that place |
| जन्तुः | प्राणी | प्राणी | Animal |

## अभ्यासः

### श्रवणं भाषणं च

१. शिक्षकात् श्रुत्वा अधस्तनानां पदानाम् अनूच्चारणं कुरुत

चिकित्सापद्धतिः, धर्मार्थसुखस्य, प्राप्तये, आयुर्वेदस्य, प्रवृत्तिः, प्रसन्नेन्द्रियः, अङ्गीकुर्वाणाः, कौमारभृत्यम्, आधुनिक्याम्, मूत्रपुरीषयोः, ऋग्वेदे, उपनिषत्सु, अष्टाङ्गहृदयम्, शाङ्र्गधरपद्धतिः, जन्तुस्तज्जम्, दुष्प्रभावरहिता

२. पुस्तकम् अवलम्ब्य प्रदत्तानां पदानाम् अर्थं श्रावयत

आयुषः, स्वास्थ्यम्, सममलः, प्रसन्नात्मा, शल्यतन्त्रम्, चिकित्सा, विभागः, आचार्याः, विद्वद्भिः, हितम्, अनुसन्धातृभिः, आहताः, निरामयाः, अधिगत्य

३. अधस्तनं गद्यांशं सस्वरं वाचयत

'आयुर्वेदः' इति पदं पदद्वयस्य संयोजनेन निर्मितम् अस्ति- आयुः, वेदः च । आयुष्-शब्दात् निष्पन्नस्य 'आयुः' इति शब्दस्य सामान्यः अर्थः 'जीवनस्य अवधिः' भवति । आयुः जीवनदायिका शक्तिः वर्तते । आयुः शरीरस्य इन्द्रियस्य सत्त्वस्य आत्मनः च संयोगः अस्ति । ज्ञानार्थकाद् विद्-धातोः घञ्प्रत्यय-योजनेन निष्पन्नस्य 'वेदः' इति पदस्य 'ज्ञानम्' इति अर्थः । अतः 'आयुर्वेदः' इति पदस्य सामान्य अर्थः 'आयुषः ज्ञानम्' भवति । आयुर्वेदस्य अनुसारेण आयुः चतुर्विधं भवति - हितायुः, अहितायुः, सुखायुः, दुःखायुः च इति । मानसेन, शारीरिकेण च रोगेण रहितस्य ज्ञानिनः सुदृढवतः च मानवस्य आयुः सुखायुः कथ्यते । एतस्य विपरीतं दुःखायुः भवति । अरीणां षड्वर्गान् विजितस्य सर्वभूतानां हिते रतस्य च आयुः हितायुः निगद्यते । एतस्य विरोधे अहितायुः भवति । एतेषु सुखायुषे हितायुषे च अस्माभिः आयुर्वेदस्य अध्ययने प्रयोगे च प्रवर्तनीयम् ।

आयुर्वेद शब्द 'आयु' र 'वेद' दुई शब्द मिलेर बनेको छ । आयुको अर्थ जीवनको अवधि हो । वेदको अर्थ ज्ञान हो । यसरी बनेको आयुर्वेदको शाब्दिक अर्थ 'आयुको ज्ञान' हुन्छ । आयु चार प्रकारको हुन्छ- हितायु, अहितायु, सुखायु, दुःखायु । मनका छ विकारलाई जितेर सबैको हित गर्ने आयु हितायु हो । हितायुको विपरीत आयु अहितायु हो । मानसिक र शारीरिक रोगले रहित ज्ञानी र दृढ मानिसको आयु सुखायु हो । यसको विपरीत आयु दुःखायु हो । हामीले हितायु र सुखायुको प्राप्तिका लागि आयुर्वेदको अध्ययन र अभ्यास गर्नुपर्छ ।

४. पाठस्य द्वितीयम् अनुच्छेदं वाचयित्वा कक्षायां श्रावयत ।

५. पाठस्य आरम्भे प्रदत्तं श्लोकं लयसंयोजनेन वाचयत ।

६. प्रदत्तं पद्यं सलयं वाचयित्वा गुरुं श्रावयत

**धर्मार्थकाममोक्षाणां मूलमुक्तं कलेवरम् ।**
**तच्च सर्वार्थसंसिद्ध्यै भवेद्यदि निरामयम् ॥**

धर्म, अर्थ, काम र मोक्ष चार पुरुषार्थ प्राप्तिका लागि शरीर मुख्य साधन हो । यिनको प्राप्तिका लागि शरीर निरोगी हुनु आवश्यक छ ।

७. स्वास्थ्यस्य आयुर्वेदस्य च विषये ज्ञातपूर्वान् विषयान् कक्षायां श्रावयत ।

८. आधुनिक-चिकित्सा-पद्धतौ तस्याः चिकित्सालयेषु वा निर्मितानां विभागानां विषये कक्षायां सखिभिः सह विमृशत ।

९. श्रवणपाठं श्रुत्वा परस्परं मेलयत

| | |
|---|---|
| विद्युद्गृहाः | दात्री |
| सांस्कृतिकम् | भूमिः |
| मोक्षस्य | सञ्चाल्यमानाः |
| सृष्टेः | रसुवा |
| महती | महत्त्वम् |
| गोसाइँकुण्डम् | कल्याणम् |

## पठनम्

१. पाठस्य पञ्चमम् अनुच्छेदं सस्वरं पठत ।

२. पाठस्य उपान्त्यस्य अनुच्छेदस्य मौनपठनं विधाय क्रियापदानि सङ्कलयत ।

३. अधस्तनस्य गद्यांशस्य द्रुतपठनं कुरुत

खिस्तशतकस्य एकादशशतकपर्यन्तम् आयुर्वेदस्य उत्कृष्टाः परम्पराः प्रचलन्त्यः आसन् । तदानीम् आयुर्वेदपरम्पराः न केवलं प्रचारे अपि तु प्रयोगे आसन् । तत्कालीनेषु प्रख्यातेषु नालन्दा, विक्रमशीला, वलभी इत्यादिषु विश्वविद्यालयेषु अध्ययनाध्यापनस्य प्रमुखविषयः आयुर्वेदः भवति स्म । तत्र वैदेशिकाः विद्यार्थिनः अपि अध्ययनाय गच्छन्ति स्म । ततः आयुर्वेदस्य ज्ञानम् अवाप्य ते स्वस्वदेशेषु तस्य प्रचारं प्रयोगं च कुर्वन्ति स्म ।

एघारौँ शताब्दीसम्म आयुर्वेदको उत्कृष्ट परम्परा प्रचलित थियो । त्यस वेलासम्म आयुर्वेद प्रचारमा मात्र नभएर प्रयोगमा थियो । त्यस वेलाका नालन्दा, विक्रमशीला, वलभी आदि विश्वविद्यालयमा पठनपाठनको प्रमुख विषय आयुर्वेद थियो । त्यहाँ विदेशी विद्यार्थी पनि आयुर्वेद पढ्न आउँथे । उनीहरू आयुर्वेद पढेर स्वदेश फर्किएपछि यसको प्रचारप्रसार र प्रयोग गर्दथे ।

४. षष्ठपाठस्य अनुच्छेदस्य भूयः भूयः पठनं विधाय प्रतिवारं पठनगतेः वर्धनस्य अभ्यासं कुरुत ।

५. अधस्तनं श्लोकं सलयं पठित्वा शिक्षकस्य साहाय्येन आशयम् प्रकाशयत

**तपःस्वाध्यायधर्माणां ब्रह्मचर्यव्रतायुषाम् ।**
**हर्त्तारः प्रसृता रोगा यत्र तत्र च सर्वशः ॥**

६. अधस्तनम् अनुच्छेदं पठित्वा निर्दिष्टान् कार्यकलापान् कुरुत

## आयुर्वेदस्य अङ्गानि

आयुर्वेदस्य अष्टौ अङ्गानि सन्ति । तत्र शल्यतन्त्रं प्रथमम् अङ्गं वर्तते । अस्मिन् अङ्गे शल्यचिकित्सायाः विवेचनं वर्तते । द्वितीयम् अङ्गं शालाक्यतन्त्रम् अस्ति । अत्र ग्रीवायाः उपरि भागेषु जायमानानां रोगाणां सपरिचयं निवारणस्य उपायाः वर्णिताः सन्ति । कायचिकित्सायां सर्वशरीरव्यापिनां ज्वरमोहादीनां रोगाणां निदानस्य, नाशस्य च उपायाः प्रतिपादिताः वर्तन्ते । हृद्रोगः, पक्षाघातः, पाण्डुरोगः, उदरशूलः इत्यादीनां रोगाणां निवारणविधिः अत्र एव वर्णितः अस्ति । भूतविद्यायां देवकोपेन, दैत्यानाम् आवेशेन, ग्रहैः, अशुभदशाभिः च उत्पन्नायाः पीडायाः निवृत्तेः उपायः निर्दिष्टः वर्तते । अयं विभागः मानसरोग-विज्ञानरूपेण अपि स्वीक्रियते । बालरोग-विषयके कौमारभृत्ये बालरोगाणां निदानस्य, शमनस्य च उपायाः उपदिष्टाः विद्यन्ते । अगदतन्त्रं विष-पीडा-निवारकम् अङ्गं वर्तते । रसायनतन्त्रे जराव्याधीनां विनाशस्य उपायाः शिक्षिताः सन्ति । अन्तिमम् अङ्गं वाजीकरणतन्त्रम् अस्ति । अस्य तन्त्रस्य सम्बन्धः विविधैः पौष्टिकतत्त्वैः सह विद्यते । प्राणिनां स्वास्थ्यरक्षणम् एव अष्टाङ्गस्य आयुर्वेदस्य प्रधानम् उद्देश्यं वर्तते ।

आयुर्वेदका आठ अङ्ग छन् । पहिलो अङ्ग शल्यतन्त्रमा शल्यचिकित्साको विवेचना गरिएको छ । यो आधुनिक चिकित्सामा 'सर्जरी' नामले प्रसिद्ध छ । दोस्रो अङ्ग शालाक्यतन्त्रमा घाँटीभन्दा माथिका शारीरिक अङ्गमा लाग्ने रोगको निदान र निवारणका उपाय बताइएका छन् । तेस्रो अङ्ग कायचिकित्सामा सम्पूर्ण शरीरसँग सम्बन्धित जरोलगायत रोगको परिचय र उपचार विधि उल्लेख गरिएको छ । मुटुरोग, पक्षाघात, जन्डिस, पेट दुखाइ आदि रोगको उपचार विधि यही अङ्गमा पाइन्छ । चौथो, भूतविद्यामा

देवताको क्रोध, दैत्यको आवेश, ग्रह र अशुभ दशाहरूका कारण उत्पन्न हुने पीडा निवारणको उपाय सिकाइएको छ । यो मानसिक रोग विभाग हो । पाँचौं, कौमारभृत्यले बालरोगको निदान र उपचारको विधि उपदेश गरेको छ । छैटौं, अगदतन्त्र सर्प, किरा आदिको विषबाट उत्पन्न रोगको उपचारसँग सम्बन्धित छ । सातौं, रसायनतन्त्रमा बुढ्यौलीसित सम्बन्धित रोग निवारणको उपाय उल्लेख गरिएको छ । आठौं तथा अन्तिम अङ्ग वाजीकरणतन्त्रको सम्बन्ध शरीरलाई आवश्यक पर्ने विभिन्न पौष्टिक तत्त्वसित छ । प्राणीको स्वास्थ्यरक्षा नै आठ अङ्गमा विभाजित आयुर्वेदको प्रमुख उद्देश्य हो ।

**(अ) शिक्षकस्य साहाय्येन परस्परं मेलयत**

| | |
|---|---|
| विषस्य शमनम् | कौमारभृत्यम् |
| बालरोगाणां चिकित्सा | भूतविद्या |
| शान्तिपाठः | रसायनतन्त्रम् |
| जराव्याधीनां विनाशः | अगदतन्त्रम् |

**(आ) पूर्णवाक्ये उत्तरं लिखत**

(क) शरीरस्य कृते पौष्टिकतत्त्वानां विवरणम् आयुर्वेदस्य कस्मिन् अङ्गे उपलभ्यते ?

(ख) अगदतन्त्रे कस्य उपदेशः विहितः अस्ति ?

(ग) शालाक्यतन्त्रे केषां चिकित्सा निर्दिष्टा वर्तते ?

(घ) कायचिकित्सा, शालाक्यतन्त्रम् इति अनयोः पार्थक्यं लिखत ।

**(ङ) अष्टाङ्गस्य आयुर्वेदस्य प्रधानम् उद्देश्यं किम् ?**

**(इ) शिक्षकस्य साहाय्यम् अवलम्ब्य अधो निर्दिष्टविषयाः आयुर्वेदस्य कस्मिन् अङ्गे समायान्ति इति लिखत**

(क) खल्वाटस्य चिकित्सा (ख) मानसरोगस्य निवारणम्

(ग) चर्मशलाकया शल्यक्रिया (घ) हृद्रोगस्य चिकित्सा

(ङ) दूषितदुग्धपानेन व्याधितस्य बालस्य रोगनिवारणम्

**(ई) अन्तर्जालादेः प्रविधेः सहयोगेन सामाजिकसञ्जालेषु पाश्चात्त्य-चिकित्सा-पद्धतौ निर्मितानां विविध-विभागानां नामानि अन्विषत । तेषु कस्य विभागस्य आयुर्वेदस्य केन अङ्गेन सह सामीप्यं वर्तते इति अन्वेषणाय कक्षायां समूहेषु विमर्शनं कारयत ।**

७. पाठस्य मौनपठनं विधाय स्वमातृभाषायां यथाक्रमं विषयवस्तूनि कथयत ।

८. पाठं पठित्वा अज्ञातार्थानि पदानि रेखाङ्कितानि कुरुत ।

९. लेख्यचिह्नानि अनुसृत्य यतिगत्योः संयोजनेन पाठस्य अष्टमम् अनुच्छेदम् उच्चैः पठत ।

१०. प्रदत्तम् अनुच्छेदं पठित्वा तदनुवर्तिनः प्रश्नान् उत्तरयत

## नित्यकर्म

एकस्मिन् अहोरात्रे अस्माभिः क्रियमाणानि कर्तव्यानि वा नियमितकार्याणि नित्यकर्म इति पदेन व्यवह्रियन्ते । केषाञ्चन कर्मणां नियमितम् आचरणं प्रायः मानवानां कृते हितकारि भवति । उदाहरणार्थं यथासमयं जागरणम्, शयनम्, भोजनम्, अध्ययनम्, व्यायामः, विहारः, स्नानम्, शौचम् इत्यादीनि कार्याणि सर्वेषां कृते सामान्यानि सन्ति । सामान्यकर्मभिः सह मानवाः स्वकीयाय निर्धारितानि कार्याणि अपि सततं कुर्वन्ति । तानि च शास्त्रेण, परम्परया, आवश्यकतया वा निर्दिष्टानि भवितुं शक्नुवन्ति । प्रतिदिनम् अभ्यसनीयानि आचरणसम्बद्धानि व्यवहारसम्बद्धानि च कार्याणि नित्यकर्मणि समायान्ति । विद्यार्थिनां कृते यथासमयं नियमितकार्याणां समापनम् अत्यावश्यकं भवति । विद्यार्थिभिः नित्यं ब्राह्मे मुहूर्ते जागरणं कर्तव्यम् । अस्मिन् काले विहितेन कार्येण जनः अधिकतमं लाभम् अवाप्नोति । प्रातः विहारस्य, व्यायामस्य, योगस्य, स्नानस्य, पठनस्य च नितरां महत्त्वं वर्तते । अतः विद्यार्थिभिः सूर्योदयात् प्राक् एव निद्रा त्यक्तव्या । तदनु शौचादिकं समाप्य व्यायामादिषु प्रवर्तनीयम् । तदनु स्नानं विधाय यथाविधि स्वकीयस्य इष्टस्य स्मरणं कर्तव्यम् । ततः परं मातापितरौ मान्यजनान् च प्रणम्य तेषाम् आशीर्वादाः आप्तव्याः । तदनु मन्दोष्णं जलं पीत्वा अध्ययने सम्यक् प्रवर्तनीयम् । प्रातः पठितः विषयः चिरस्थायी, चिरस्मरणीयः च

भवति । अतः प्रत्यूषस्य अधिकतरकालः पठनेन लेखनेन च यापनीयः । नियमितसमये अल्पाहारः भोजनं च स्वीकरणीयम् । यथासमयं विद्यालये गन्तव्यम् । तत्र गुरुजनानां यथोचितं सत्कारः विधेयः । सखिभिः अन्यैः च सह सद्व्यवहारः प्रदर्शनीयः । निर्धारित-समयसारिण्याः अनुसारेण पठनं क्रीडनादिकं च विधेयम् । सायं गृहं प्रत्यावृत्य पाणिपादस्य स्वच्छीकरणं विधातव्यम् । ततः अल्पाहारः स्वीकर्तव्यः । तदनु गृहकार्यं समाप्य एव खेलनादिके प्रवर्तितव्यम् । नियमितसमये रात्रिभोजनं स्वीकरणीयम् । रात्रिभोजनात् पश्चात् अधिकतमेन सार्धैकघण्टा यावत् रचनात्मकेषु कार्येषु प्रवृत्य शयनं कर्तव्यम् । आत्मनः कृते निर्धारितानि अन्यानि अपि कार्याणि यथासमयं समापनीयानि । यथासम्भवं सर्वाणि अपि स्वकीयानि कार्याणि स्वयमेव सम्पादनीयानि ।

हामीले एक दिनमा गर्ने वा गर्नुपर्ने नियमित कामलाई नित्यकर्म भनिन्छ । केही कामको नियमित अभ्यास सबैजसो मानिसका लागि लाभदायी हुन्छ । उचित समयमा सुत्नु, उठ्नु, खानु, पढ्नु, व्यायाम गर्नु, शौचादि कार्य गर्नु सबै मानिसका साझा काम हुन् । यी सामान्य कामसँगै मानिसहरू आफ्नो जिम्मेवारीमा आएका अन्य काम पनि निरन्तर गर्दछन् । हरेक दिन अभ्यास गरिने आचरण र व्यवहारसम्बन्धी कार्यहरू नित्यकर्म हुन् । व्यक्तिका नित्यकर्म शास्त्र, परम्परा र आवश्यकताले निर्धारण गरेका हुन्छन् । विद्यार्थीका लागि तोकिएको समयमा नियमित काम गर्नु अत्यावश्यक हुन्छ । विद्यार्थीले सधैँ ब्रह्म मुहूर्तमा उठ्नुपर्छ । यो समयमा गरिएको कामको बढी लाभ प्राप्त हुन्छ । बिहान हिँड्नु, योग तथा व्यायाम गर्नु, नुहाउनु र पढ्नुको ठुलो महत्त्व छ । त्यसैले सूर्योदयभन्दा पहिले नै उठेर शौचादि नित्यकर्म सक्नुपर्छ । त्यसपछि योग तथा व्यायाममा लाग्नुपर्छ । त्यसपछि नुहाएर आफ्नो परम्पराअनुसार इष्टदेवलाई सम्झनुपर्छ । त्यसपछि मातापिता तथा मान्यजनलाई प्रणाम गरेर उनीहरूको आशीर्वाद लिनुपर्छ । त्यसपछि मनतातो पानी पिएर अध्ययनमा लाग्नुपर्छ । बिहान पढेको कुरा लामो समय सम्झिने हुन्छ । त्यसपछि नियमित समयमा भोजन गरेर विद्यालय जानुपर्छ । विद्यालयमा गुरुजनको यथोचित सत्कार गर्नुपर्छ । साथीहरूसित सद्व्यवहार गर्नुपर्छ । तोकिएको समयतालिकाअनुसार पढ्नु र खेल्नुपर्छ । बेलुकी घर फर्किएर सरसफाइको काम गर्नुपर्छ । खाजा खाएर गृहकार्य सकेपछि मात्र मनोरञ्जनको काममा लाग्नुपर्छ । बेलुकीको भोजनपछि बढीमा डेढ घण्टा रचनात्मक काममा संलग्न भएर सुत्नुपर्छ । आफ्ना निम्ति तोकिएका अन्य काम पनि नियमित समयमा गर्नुपर्छ । सकेसम्म आफ्नो काम आफैँ गर्नुपर्छ ।

**(अ) एकपदेन उत्तरयत**

(क) 'हितकारि' इति पदं कस्य विशेषणम् ?

(ख) 'निरन्तरम्' इत्यर्थे अत्र किम् अव्ययपदं प्रयुक्तं वर्तते ?

(ग) 'प्रातः' इति अव्ययपदस्य अर्थः अनुच्छेदतः अन्विषत ।

(घ) 'समापनं कृत्वा' इत्यस्य कृते अत्र कस्य पदस्य प्रयोगः वर्तते ?

(ङ) 'पीत्वा' इति पदस्य कर्मपदं किम् ?

(च) 'अवाप्नोति' इति क्रियापदस्य कर्तृपदं किम् ?

(छ) 'ततः' इत्यस्य एकं पर्यायपदं लिखत ।

(ज) 'जागरणम्' इत्यस्य किं विलोमपदम् अत्र प्रयुक्तम् ?

(झ) 'योजनीयम्' इत्यर्थे अत्र प्रयुक्तं पदम् अन्विषत ।

(ञ) 'कर्तव्यम्', 'विधातव्यम्' एते पर्यायपदे अथवा विलोमपदे वर्तेते ?

**(आ) एकवाक्येन उत्तरं लिखत**

(क) अस्माभिः प्रतिदिनं कदा निद्रा त्यक्तव्या ?

(ख) नित्यकर्मणः परिचयं दत्त ।

(ग) कदा पठनस्य अधिकाः लाभाः भवन्ति ?

(घ) स्वस्थस्य आहारस्य विहारस्य च महत्त्वं लिखत ।

(ङ) योगस्य व्यायामस्य च स्वास्थ्येन कः सम्बन्धः ?

(च) स्वास्थ्यरक्षणस्य आधारभूतः उपायः कः ?

(छ) स्वकीयानि कार्याणि किमर्थं सम्पादनीयानि ?

(ज) अस्माकं कृते किं हितकारि भवति ?

**(इ) नित्यकर्मणः यथासमयं सम्पादनस्य महत्त्वं सङ्क्षेपेण वर्णयत ।**

**लेखनम्**

१. **पाठस्य आधारेण पदानाम् अर्थं लिखत**

(क) आयुः (ख) स्वास्थ्यम् (ग) समधातुः (घ) नित्यम् (ङ) निवारणम्

(च) रोगः (छ) शल्यचिकित्सा (ज) विद्यते (झ) महती (ञ) हितकारी

३. **पाठात् पञ्च पञ्च क्रियापदानि, अव्ययपदानि, विशेष्यपदानि, विशेषणपदानि च सङ्गृह्य सारिण्यां प्रदर्शयत ।**

४. **अधस्तनाद् गद्यांशात् पञ्च प्रश्नान् निर्मात**

धन्वन्तरिः देवानां चिकित्सकः अस्ति । नेपाले कार्तिकमासस्य कृष्णपक्षस्य त्रयोदशी तिथिः आरोग्यदिवसरूपेण घोषितः विद्यते । अयं दिवसः धन्वन्तरेः जन्मदिवसः वर्तते । अस्मिन् एव दिवसे आयुर्वेद-दिवस-पर्व अपि समायोज्यते । आयुर्वेददिवसे आयुर्वेदस्य अध्यापकाः, विद्यार्थिनः, व्यवसायिनः, प्रेमिणः च यथाविधि धन्वन्तरिं पूजयन्ति । अस्मिन् अवसरे रोगिणः च शीघ्रं रोगनिवृत्तये धन्वन्तरिं प्रार्थयन्ते । सर्वप्रथमम् आयुर्वेदस्य उपदेशः ब्रह्मणा कृतः इति आयुर्वेदस्य मर्मज्ञानां मतं विद्यते । प्रमुखाणाम् आयुर्वेदग्रन्थानाम् अनुसारेण ब्रह्मा आयुर्वेदस्य ज्ञानं दक्षप्रजापतये अयच्छत् । दक्षप्रजापतिः इदं ज्ञानं अश्विनीकुमाराभ्याम् अदात् । अश्विनीकुमारौ देवराजाय इन्द्राय, भारद्वाजाय, आत्रेयाय च इदं ज्ञानं प्रायच्छताम् । इन्द्रः धन्वन्तरिम् तस्य शिक्षणम् अकरोत् । धन्वन्तरिः इन्द्राद् ज्ञानम् अवाप्य आयुर्वेदस्य अनुसन्धानं प्रयोगं च कृतवान् । केचन विद्वांसः धन्वन्तरिम् एव आयुर्वेदस्य प्रणेतारं मन्यन्ते ।

धन्वन्तरि देवताका चिकित्सक हुन् । नेपालमा कार्तिक कृष्ण त्रयोदशी तिथिलाई आरोग्य दिवसका रूपमा मनाइन्छ । यो धन्वन्तरिको जन्मदिन हो । यस दिन आयुर्वेदका अध्यापक, विद्यार्थी, व्यवसायी र अन्य आयुर्वेदप्रेमीले विधिपूर्वक धन्वन्तरिको पूजा गर्छन् । यस अवसरमा बिरामीले पनि रोगनिवारणका लागि धन्वन्तरिको प्रार्थना गर्दछन् । आयुर्वेदविज्ञका अनुसार सर्वप्रथम आयुर्वेदको ज्ञान ब्रह्माले दक्षप्रजापतिलाई दिएका थिए । दक्षप्रजापतिले यो ज्ञान अश्विनीकुमारहरूलाई दिए । अश्विनीकुमारहरूले यो ज्ञान देवराज इन्द्र, भारद्वाज र आत्रेयलाई दिए । इन्द्रले यो विद्या धन्वन्तरिलाई सिकाए । धन्वन्तरिले इन्द्रबाट प्राप्त ज्ञानको अनुसन्धान र प्रयोग गरे । केही विद्वान्हरू धन्वन्तरिलाई नै आयुर्वेदको प्रणेता मान्दछन् ।

५. पाठाद् अर्थम् अवगम्य प्रदत्तानां पदानां वाक्येषु प्रयोगं दर्शयत

(क) स्वास्थ्यरक्षणम् (ख) अपरम् (ग) अष्टौ (घ) स्वस्थः

(ङ) अधुना (च) विधाय (छ) अन्तरा (ज) प्रयोजनम्

(झ) कथ्यते (ञ) यापयामः

६. पाठम् अवलम्ब्य पदेन उत्तरं लिखत

(क) पौरस्त्य-चिकित्साशास्त्र-रूपेण कः प्रसिद्धः वर्तते ?

(ख) स्वस्थमानवानां स्वास्थ्यरक्षणं आयुर्वेदस्य कतमं प्रयोजनम् ?

(ग) चरकसंहितायाः रचयिता कः ?

(घ) आयुर्वेदस्य कति अङ्गानि सन्ति ?

(ङ) आरोग्याय का सर्वोत्तमा मन्यते ?

(च) आयुर्वेदस्य प्रथमम् अङ्गं किम् ?

(छ) आयुर्वेदस्य स्रोतोग्रन्थः कः ?

(ज) 'समाग्निः' इत्यत्र कयोः पदयोः सन्धिः वर्तते ?

(झ) 'प्रसन्नेन्द्रियः' इत्यस्य सन्धिं विच्छेदयत ।

(ञ) 'चर्या' इति पदस्य लिङ्गं निर्दिशत ।

७. अधस्तनानां प्रश्नानाम् उत्तरम् एकेन वाक्येन लिखत

(क) कान् अनुसृत्य वयं नीरुजाः भवितुं शक्नुमः ?

(ख) अस्माकं देशः कैः सम्पन्नः विद्यते ?

(ग) आयुर्वेदस्य प्रमुखग्रन्थेषु त्रयाणां नामानि कानि ?

(घ) आयुर्वेदस्य प्रमुखाः आचार्याः के ?

(ङ) आयुर्वेदः कस्य वेदस्य उपवेदः वर्तते ?

(च) आयुर्वेदस्य द्वितीयं प्रयोजनं किम् ?

(छ) आयुर्वेदः किं प्रतिपादयति ?

(ज) आयुः केषां साधनं वर्तते ?

(झ) स्वास्थ्यं किम् ?

(ञ) ब्रह्मचर्यस्य परिपालनेन कः लाभः ?

८. पाठम् अनुसृत्य सङ्क्षेपेण प्रश्नान् उत्तरयत

(क) स्वस्थस्य जनस्य सप्त लक्षणानि कानि ?

(ख) आयुर्वेदस्य अङ्गानां नामानि लिखत ।

(ग) आयुर्वेदः जनान् किम् उपदिशति ?

(घ) आयुर्वेदस्य प्रयोजनं सोदाहरणं लिखत ।

(ङ) नेपाले आयुर्वेदस्य महत्त्वं वर्णयत ।

(च) स्वास्थ्यरक्षणस्य उपायान् सूत्ररूपेण लिखत ।

(छ) आयुर्वेदस्य चर्चा कुत्र कुत्र उपलभ्यते ?

(ज) आधुनिक्याः चिकित्सापद्धतेः प्रमुखः आधारः कः ?

(झ) आयुषः रक्षा कथं किमर्थं च करणीया ?

(ञ) रोगाणां प्रभवनस्य कारणानि लिखत ।

९. आयुर्वेदचिकित्सापद्धतेः वैशिष्ट्यं पञ्चसु वाक्येषु प्रकाशयत ।

१०. शिक्षकस्य पाठस्य च सहयोगेन 'यस्य देशस्य यो जन्तुस्तज्जं तस्यौषधं हितम्' इति पद्यवाक्यस्य आशयं प्रकाशयत ।

## रचनात्मकः अभ्यासः

१. मञ्जूषातः समुचितपदानां वाक्यखण्डानां वा चयनेन रिक्तस्थानं पूरयित्वा प्रदत्तस्य अनुच्छेदस्य पुनर्लेखनं कुरुत

| |
|---|
| मधुरः, कटुः, अम्लः, तिक्तः, कषायः, लवणः च इति, दोषाः वर्णिताः सन्ति, अस्वस्थाः, वैषम्येन, त्रिदोषाः, षण्णां रसानाम् |

आयुर्वेदे त्रयः ----------- । वातः, पित्तः, कफः इति एते ------------ कथ्यन्ते ।

शरीरे एतेषां दोषाणां ------------------- एव मानवाः --------------------जायन्ते ।

आयुर्वेदे ------------------- अपि वर्णनं विद्यते । ------------------ षड्रसाः सन्ति ।

२. उदाहरणम् अनुसृत्य मञ्जूषायां प्रदत्तानां पदानां प्रयोगेण अधस्तनपद्यस्य अनुकूलानि वाक्यानि रचयत

रोगाः कार्श्यकरा बलक्षयकरा देहस्य चेष्टाहरा

दृष्टा इन्द्रियशक्तिसङ्क्षयकराः सर्वाङ्गपीडाकराः ।

धर्मार्थाखिलकाममुक्तिषु महाविघ्नस्वरूपा बलात्

प्राणानाशु हरन्ति सन्ति यदि ते क्षेमं कुतः प्राणिनाम् ॥

| |
|---|
| रोगहरू दुब्लोपन ल्याउने, बल घटाउने, शरीरको चेतना हरण गर्ने हुन्छन् । रोगले इन्द्रियहरूको शक्तिमा ह्रास ल्याउँछन् । यिनीहरूले शरीरका सबै अङ्गलाई पीडा दिन्छन् । रोगले धर्म, अर्थ, काम र मोक्ष (चार पुरुषार्थ)को प्राप्तिमा ठुलो अवरोध वा बाधा पुऱ्याउँछन् । त्यति मात्र नभएर रोगले बलपूर्वक शीघ्र प्राणहरणसमेत गर्दछन् । त्यसैले यदि शरीरमा रोग छन् भने प्राणीलाई सुखशान्ति कहिल्यै हुन सक्दैन । |

यथा - रोगाः कार्श्यकराः भवन्ति ।

यदि रोगाः सन्ति चेत् प्राणिनां क्षेमं नास्ति ।

| |
|---|
| बलक्षयकराः, सर्वाङ्गपीडाकराः, महाविघ्नकराः, प्राणान् |

३.   पञ्चसु वाक्येषु प्रदत्तं चित्रं वर्णयत



**श्रवणपाठः**

त्रिशूली नेपालस्य प्रसिद्धा नदी वर्तते । इयं सप्तगण्डकीनदीप्रणाल्याः सहायकनदीषु मुख्या अस्ति । इयं नदी नेपालस्य मध्यक्षेत्रं सिञ्चति । इयं रसुवाजनपदस्य गोसाइँकुण्डतः प्रभवति । त्रिशूलधारायाः सम्बन्धः भगवता शङ्करेण सह विद्यते । अतः अस्याः नद्याः धार्मिकेन सह आर्थिकम्, सामाजिकम्, सांस्कृतिकं च महत्त्वं वर्तते । अस्याः जलेन नदीतटाकेषु अनेके विद्युद्गृहाः सञ्चाल्यमानाः सन्ति । ततः महती ऊर्जा उत्पाद्यते । अस्याः जलेन रसुवा-नुवाकोट-धादिङादिजनपदेषु महती भूमि सिक्ता भवति । अतः कृषेः विकासाय अस्याः महद् योगदानं वर्तते । अस्यां मत्स्यादीनां पालनेन अपि जनाः प्रभूतं धनम् अर्जन्ति । इयं नदी पर्यटनस्य अपि आधारः वर्तते । पर्यटकाः अस्यां जलयात्रां विधाय आनन्दं प्राप्नुवन्ति । नदी न केवलं समृद्धेः अपि तु मोक्षस्य अपि दात्री मन्यते । इयं सृष्टेः कल्याणाय अनवरतं प्रवहति ।